

# अर्पणपत्रिका.

तत्रभवतां, कैलासवासिनां, निरुपमदेशभक्ति-
वशीकृतजनहृदयानां, निरन्तरसमापतदाप-
त्सहस्रसहनव्यक्तीकृतधैर्याणां, नूतन-
रामदासस्वाम्यवताराणां, मान्यानां,
श्री १०८ बाळ गंगाधर टिळक-
महाशयानां, करकमलयोरिदं
चरितं तदीयगुणगणसमा-
कृष्टचेतसा हस्रकरोपाह्वेन
श्रीपादशास्त्रिणा
समर्पितम्.



# कृतज्ञताप्रदर्शनम् ।



धर्मशीलैर्गोब्राह्मणपरिसेवनदक्षैः परस्त्रीमातृवद्वृत्तिभिः कुलपरंपरासमागतसदाचारसमाचरणनिरतैः संतोषशालिभिर्येवलेग्रामनिवासिभिर्गंगारामछबिलदासनाम्ना विख्यातस्य पेढीतिव्यावहारिकनाम्नः कोशगृहस्य स्वामिभिर्वल्लभदासश्रेष्ठिभिरस्य पुस्तकस्य प्रकाशने कृतसाहाय्योऽहं कृतज्ञतां भावयामि. प्रार्थयामि च परमात्मानं तेषां मनोरथान्पूरयितुमिति शम्.

**ग्रंथकर्ता.**



# प्रस्तावना.

अयि भारतवासिनः सज्जना महाभागाः! अद्य खलु तत्रभवतां सनातनधर्मोद्धारार्थं मृत्युलोकमागतानां, व्यवहारपरमार्थोभयसाधनयोग्यशिक्षाणां, अगणितजनसेवितपादकमलानां मान्यानां श्रीसमर्थरामदासस्वामिनां पवित्रं चरितामृतं युष्माकं करकमलेषु निदधतो मे मनः संतोषस्य परां काष्ठामवगाहते. यदा खलु ग्रीष्मरविरिव दुःसहपरितापा यवनाः समग्रं भारतमाक्रम्य कल्पवृक्षमिव वांछितप्रदं सनातनधर्मं नामशेषं विधातुं प्रायतन्त, तदा खलु यैरवतीर्य रक्षितोऽयं धर्मस्तथा शिवराजद्वारा परास्ता बलाढ्या यवनाधिपास्तेषां चरितामृतं कियदुपदेशकारकं स्यादिति भवद्भिरेव विचारणीयं. साम्प्रतमपि घोरेण दुर्धरप्रसरेण कलिना पुनरपि ग्रस्तोऽयं धर्मः साकं भारतेन, तस्मादधुनाऽस्माभिर्यदि श्रीसमर्थचरणानां चरितमंशतोऽपि अनुक्रियेत तदा महान् लाभः स्यात्. विशेषतश्चाधुना परमात्मविश्वासो न्यूनीभूतः! तत एवेमाः सर्वा विपदः. बान्धवाः? अतः सर्वथा परमात्मनि विश्वस्तानां श्रीसमर्थचरणानामिदं चरितं बालाः सपरिश्रमं पठिष्यन्ति तदा तेऽपि परमेश्वरे विश्वस्युः. लब्धमूले परमात्मविश्वासकल्पवृक्षे सूर्योदये तिमिरमिव सर्वा अपि विपदोऽस्तंगमिष्यन्ति. विशेषतश्च श्रीसमर्थचरणानां निस्पृहत्वमवश्यमनुकरणीयमित्यत्र न संशयः. बान्धवाः! यद्यपि मदीये लेखे बहवो दोषाः स्युस्तथापि तेषु मनोऽदत्वा केवलं श्रीसमर्थचरितामृतं पीत्वा भवद्भिः सन्तोष्टव्यं. अन्तेच जगन्नाथः श्रीरामचन्द्र एतादृशचरित्रलेखनफलीभूतं बालानां संस्कृतभाषायामनायासेन प्रवेशो भवत्विति मम मनोरथं पूरयितुं संप्रार्थ्य विरमामि.

विदुषां वशंवदः,

श्रीपादशास्त्री.

# मुख्यविषयानुक्रमः







# पूर्वप्रसंगः

अस्ति अस्मिन् अतिविशाले समुद्रवलयांकिते गगनगतशिखरसहस्रविराजमानहिमालयसुरक्षिते भारते वर्षे महाराष्ट्रनामाऽतिसमीचीन एको भागः. यस्य चोत्तरेण विस्तृतवनराजिमण्डितः, अखण्डनिपतन्निर्झरसहस्रविभूषितः ज्येष्ठबन्धुरिव हिमालयस्य विंध्योनाम पर्वतः. दक्षिणेन अतिपवित्रसलिला स्वभक्तान् पावयितुं दक्षिणापथं समागता भागीरथीव कृष्णानदी. पूर्वेण विद्वत्खनिः आन्ध्रदेशः. पश्चिमेन अपरसमुद्रः. यत्र च सह्योनाम हिमाचलस्यापरः सोदरइव अतिभयंकरकन्दरः क्रूरव्याघ्रादिपशुनिवासः कृष्णापंचगंगादिमहानदीनां जनकः शैलश्रेष्ठो विराजते.

यं च भगवतः सीतानाथस्य परमपवित्रैः चरणरजोभिर्मण्डितं पंचवटीक्षेत्रं, भक्तप्रवरेण पुण्डलीकेन समानीतविठ्ठलेशं पंढरपुरं, श्रीशिवराजस्य कुलस्वामिन्या भवान्या समलंकृतं तुळजापुरं, तथाऽन्यान्यपि क्षेत्राणि अलंकुर्वन्ति पापिनां दर्शनमात्रेण पापं क्षालयन्ति.

यस्मिंश्च गोब्राह्मणप्रतिपालकराजाधिराजशिवराजविरचितैः पराक्रमैः सुशोभितानि सहस्रशः स्थलानि प्रेक्षकाणां मनःसु कौतूहलं समुत्पादयन्ति.

यश्च समुद्रगोपितापरभागः पर्वतराजसुरक्षितमध्यभागः केवलं स्वातंत्र्यदेव्या निवास इव लक्ष्यते. तस्मिन् अस्मिन् महाराष्ट्रदेशे यवनानामागमनात्पूर्वमार्यवंशसंभवा एव राजानो राज्यमकुर्वन्. तेषामप्यागमनात्प्रथममत्रानार्या नानाजातयः स्वस्वजातिप्रमुखैः सुरक्षिता न्यवसन्निति इतिहासकारा वदन्ति. ते च आर्यवंशजा राजानः स्वनिवासे आर्यावर्ते यवनैर्जिते क्रमेणात्रागच्छन्. प्रियवाचकाः ! अस्य सर्वस्य भूतस्य भाविनश्च वृत्तस्योपपत्तये संक्षेपेण इतिहासस्य सिंहावलोकनं करोमि.

यदा खलु इमे महंमदीया इमां भारतभुवं सुसंपन्नां वीक्ष्य जेतुमागतास्तदाऽर्यावर्ते पृथ्वीराजप्रभृतय एव क्षत्रियकुलावतंसा भूपाला न्यराजन्. तेषां राजधानीनगराण्यपि इन्द्रप्रस्थप्रभृतीनि सुसंपन्नान्येवासन्.

अथ महंमदीयेन घोरीत्युपाव्हेन शहाबुद्दीनेन जिते आर्यावर्ते क्षत्रियकुलसंभवा इतरे राजानो दक्षिणापथमागत्य नूतनानि स्वराज्यानि स्थापयामासुः. तेषु राज्येषु देवगिरिराजधानीकं रामदेवनृपतिपरिपालितं राज्यमेव प्रमुखमासीत्.

एवमतीतेषु कतिपयवर्षेषु आर्यावर्ते महंमदीयानां विस्तारो महानभूत्. प्रतिदिनं नूतना महंमदीयाः 'इराण अरबस्थान तार्तरी' इत्यादिदेशेभ्यो योगक्षेमार्थं पिपीलिकाः शर्करापेटिकामिवागच्छन्. आगतास्ते सर्वां समृद्धिं वीक्ष्यात्रैव न्यवसन्. तेषां च पुत्रपौत्रादयोऽपि. एवंक्रमेण प्रवर्धमाने महंमदीयवंशसागरे केचन महंमदीयाः साहसिका दक्षिणापथे वर्तमानानि क्षत्रियाणां राज्यानि जेतुमैच्छन्. तेषु च खिलजीवंशसंभवः अल्लाउद्दीननामा क्रूरकर्मा यव-

नो महता सैन्येन समन्वितो दक्षिणापथं प्रविश्य गुर्जरदेशं निर्जित्य तदधिपस्य कर्णराजस्य पत्नीं कमलदेवीं स्वपत्नीं चकार. ततश्च महता वेगेन देवगिरिं रुरोध जिगाय च.

प्रियवाचकाः! एवं क्रमेण प्रतिवर्षं सहस्रशो महंमदीयाः सैन्यभारसमन्विता इमं महाराष्ट्रदेशं प्रविश्याहरन् अपारं द्रव्यं, सुस्वरूपाः सुशीला आर्यवधूश्च. तेनायं महाराष्ट्रदेशोऽतिदीनो बभूव. मदोन्मत्ताः ते यवनाधिपाः प्रतिदिनं सहस्रशो ब्राह्मणान् बलात्कारेण महंमदीयानकुर्वन्. बहवश्च धर्मान्तरभिया प्राणान् जहुः. देवालयानि च प्रायः सर्वाण्येव भूमिसात्कृत्य देवमूर्तिशकलैः स्वोपासनामंदिराणां सोपानततिं ते व्यरचयन्. यदा तु अस्मच्चरित्रनायकः प्रादुरभूत् तदा दक्षिणापथे नासीदीदृशः कोऽप्येको ग्रामः, यत्र बलात्कारेण केषांचित् भार्या यवनैर्नापहृताः. देवालयं च न विध्वस्तं. ब्राह्मणाश्च न यवनाः कृताः. तदानीं च क्षत्रियाणामीदृशः संहारोऽभूत् यत् तदा दक्षिणापथे नासीत्क्षत्रियाणामेकमपि राज्यं. महंमदीयानां तु त्रीणि प्रधानानि आसन्. एकं विजापुरस्थं, द्वितीयं गोवळकोंडेनगरस्थं, तृतीयं हैदराबादनगरस्थं. तानि एतानि त्रीणि राज्यानि केनापि साहसिकेन यवनेन स्थापितात् विस्तीर्णात् बहामनीसंज्ञकात् यवनराज्यात् प्रादुर्भूतानि. अस्तु. वाचकाः? नाहमधुना सर्वमेवेतिहासं लिखितुं प्रवृत्तः किंतु प्रस्तुतचरित्रनायकस्य अवतारकथोपयोगिनमुपोद्धातं लिखितुं.

• उपरिलिखितैः एभिर्यवनराज्यैः आक्रान्तोऽयं महाराष्ट्रदेशोऽतिजर्जरितो बभूव. तथाहि. यदा तु यवनाधिपस्य कोशे द्रव्यं नासीत् तदा स सेनापतिमाहूय प्रजालुण्ठनार्थमादिशति स्म. सोऽपीदं राज-

शासनं शिरसा स्वीकुर्वाणो यथेच्छं प्रजा निर्लुण्ठ्य अगणिता आर्यमहिला दासीकृत्य संपादितात् धनराशेः किंचित् स्वस्वामिनं सह काभिरप्यार्यवधूभिः उपायनीकृत्य अवशिष्टं सर्वमात्मसादकरोत्. वाचकाः! एवंविधाः प्रसंगाः प्रजानामुपरि प्रतिदिनमापतन्. यतो यवनाधिपः स्वान्तःपुरे प्रतिदिनं नूतना असंख्या आर्यरमणीः प्रावेशयत्. एवमन्या वारांगना दासीरपि. तेन द्रव्यव्ययः क्रमेण अवर्धत. सेनापत्यादयोऽधिकारिणोऽपि भर्तुः परांगनाप्रियत्वं वीक्ष्य कपटेन वा बलात्कारेण वा चटुलनयनाः सुस्वरूपा युवतीः आर्यमहिलाः संपाद्य ताश्च उपायनीकृत्य तदीयां कृपां संपादयितुं प्रायतन्त. सज्जनाः? सुप्रतीतं चेतिहासविदां यवनानां परांगनाप्रियत्वं. अस्मिन्विषयेऽहमेकमेव उदाहरणं कथयामि.

उपरिनिवेदितो दक्षिणापथप्रवेशे प्रथमः अल्लाउद्दीननामा यवनराजो यदा गुर्जरदेशाधिपं कर्णरायं निर्जित्य तदीयां पत्नीं कमलदेवीमात्मभार्यामकरोत्तदा तदीया दुहिता देवलदेवी निभृतं पलायतेस्म. या च देवगिरिनाथस्य श्रीरामदेवस्य स्नुषात्वेन कल्पिता. सा च इतस्ततो निभृतं संचरन्ती केनापि यवनराजसेवकेन समवलोकिता. स तु तां गृहीत्वा स्वस्वामिनोऽनुग्रहाकांक्षी राजधानीं दिल्लीनगरमाययौ. अल्लाउद्दीनोऽपि तं राजनिष्ठं सेवकमनुगृह्य तां स्वसंनिधावस्थापयत्.

अथ अल्लाउद्दीनस्य ज्येष्ठः पुत्रः 'खिरजाखानः' तस्याः प्रीतिं संपाद्य तां पर्यणयत्. ततश्च मृते अल्लाउद्दीने तस्य कनिष्ठः पुत्रः 'मुबारकः' स्वज्येष्ठबन्धोरक्षिणी उद्धृत्य तां स्वपत्नीं चक्रे. ततश्च तस्याऽपि विश्वासपात्रमधिकारी 'खुस्रुः' स्वपालकं मुबारकं हत्वा तां हतभाग्या-

मात्मपत्नीं व्यधत्त. ततश्च तस्मिन्नपि 'गियासउद्दीन' नाम्ना केनचित् यवनेन निहते सा वराकी तेनाप्यनुगृहीता पंचत्वं प्राप्य अस्मात् मानवलोकनरकादात्मानममोचयत्.

वाचकाः! किमिदं ? कस्यापि एकस्य राज्ञः कन्यां बलात्कारेण स्वीकृत्य तदर्थं स्वबन्धूनां घात इति विचित्रम्. तत्रापि केवलमेकस्या राजकन्याया वारांगनाया इव बलात्कारेण भोग इति महाशोकास्पदं! ईदृशाश्च मानवाधमा ईदृशैराचारैः पशूनप्युच्चैःकुर्वन्ति. अस्तु. प्रकृतमनुसरामः

एवं प्रतिदिनमार्यमहिलाः पतिव्रताः शीलादभ्रश्यन्. प्रायः यवनसैनिकगृहीता आर्यमहिलाः स्वप्राणप्रियपातिव्रत्यभंगभिया प्राणानेव विससर्जुः. तथैव ब्राह्मणा अपि दुर्बला धर्मान्तरभीत्या देशान्तरं जग्मुः. सबलाश्च अयुध्यन्त. दीना गावश्च सहस्रशः प्राणानत्यजन्. देवालयानि च विध्वस्तानि. मूर्तयश्च शकलीकृताः. एवंक्रमेण प्रवर्धमाने पापराशौ सनातनधर्मोऽकम्पत. इमां स्वधर्मस्य स्वदेशस्य स्वकुलस्य च दुर्दशां वीक्ष्य दुःखाकुलाः सज्जनाः सीतापतिं रक्षणार्थं प्रार्थयामासुः. तत्र केचन तपस्विनो निभृतं गुहासु स्थित्वा तीव्रं तपस्तप्तुमारभन्त. अन्ये च भक्तश्रेष्ठा उत्कटभक्त्या उपास्यदेवतां समाराधयन्. ग्रीष्मे प्रखररविकिरणसंतापसंतप्ताः पश्वादिजीवगणा मेघराजमिव प्रायः सर्वेऽपि भारतवासिनो जनाः सकलभक्तकल्याणदक्षं निखिलकर्मसाक्षिणं परमेश्वरं 'त्रायस्व त्रायस्व भगवन्' इति घोषयन्तः शरणं जग्मुः. अनेन भक्तस्तोत्रेण सन्तुष्टो नारायणः कतिपयेभ्यः स्वभक्तेभ्यः स्वयं प्रकटीभूय 'न भेतव्यं ? अहमस्मात्संकटात् युष्मानुत्तारयिष्यामि' इति कथयामा-

स. तेन सन्तुष्टा दृढश्रद्धावन्तः भक्ताः सर्वेभ्यो भाविकेभ्यः तद्पूर्वं वृत्तं कथयन्तः सर्वेषां चित्तेषु भगवद्वाक्येन विश्वासमुत्पादयन्तः प्रायः सर्वमेव भयं व्यपाकुर्वन्.

अथैवं सर्वत्र प्रवर्धमाने भगवदवतारसन्नाहे, समुल्लसत्सु भगवद्वतारचरणारविन्ददर्शनाय भक्तानां चेतःसु, त्रैलोक्यरक्षणदक्षः श्रीरामः स्वयमवतरितुमियेष. तदानीं तत्समीपवर्ती भक्तमुकुटमणिर्भगवान् मारुतिर्विनयेनाब्रवीत्— 'नाथ ? नास्ति तादृशं कार्यगौरवं, यदर्थं भवद्भिरेव स्वयमवतरणीयम्. यदि युष्माकमाज्ञा स्यात् तदाऽहमेवावतीर्य कृत्स्नं कार्यं विधाय अचिरादेव युष्मच्चरणयोः पुनर्दर्शनार्थमागमिष्यामि' इति.

स तु त्रैलोक्यसाक्षी भगवान् तस्य मारुतेः सेवौत्सुक्यं वीक्ष्य 'तथाऽस्तु' इत्येवावदत्.ताममृतमयीमाज्ञां श्रवणाभ्यां निपीय स मारुतिः त्रैलोक्यमातापित्रोः सीतारामचन्द्रयोः चरणसरोजे नमस्कृत्य कार्यार्थं निर्गतः प्रथमतः स्वावतारयोग्यं निष्पापं स्थानमन्वेषयतिस्म. युक्तं चैतत्. नहि दोषदूषिते क्षेत्रेऽत्युत्तममपि बीजं प्ररोहसमर्थं भवति ! तदानीं च प्रायः सर्वाण्येव कुलानि यवनसंपर्कदूषितानि देवाराधनादिस्वकर्तव्यविमुखानि आसन्. अस्तु. वाचकाः ? भगवत्कार्यार्थं निर्गतः स रामभक्तो मारुतिः कस्मिन् स्थले प्रकटीबभूवेति सर्वं वृत्तं वयमग्रिमप्रकरणे वर्णयिष्यामः.






अस्ति दक्षिणापथे सुविख्याताया गोदावर्यास्तीरे बीडनामा प्रसिद्धः सुसम्पन्नो महाराष्ट्रस्यैको भागः. तत्र अस्मच्चरित्रनायकस्य पूर्वजा अवसन्. यदा तु तस्मिन् विभागे यवनाधिपानां कलहा अजायन्त तदा स विभागो निर्मनुष्योऽभवत्. तेन च प्रायः सर्वे एव विप्रवरा देशान्तरमगच्छन्. तदानीमेव दशरथपन्तो नाम श्रीसमर्थपूर्वजः 'जांब'नामके ग्रामे समागत्यावसत्. वाचकाः ? अयमेवास्मच्चरित्रनायकस्य मूलभूतः पुरुषः.

अस्य दशरथपन्तस्य क्रमेण ये पुत्रपौत्रादयो वंशजा अभवन्, ते सर्वेऽपि वैराग्यशालिनः सदाचारसंपन्ना रामसेवारता एवासन्. कथमन्यथा तेषां कुलेऽवतारार्थं भगवान् मारुतिः स्पृहयेत्.

एवंक्रमेण दशरथपन्तस्य वंशसागरे वर्धमाने एकविंशः पुरुषः त्रिंबकपन्तनामाऽभूत्. अयं च श्रीसमर्थचरणानां पितामहः. अस्य च पुत्रः सूर्याजीपन्तः समुद्र इव चन्द्रस्य श्रीसमर्थानां जनकः सच्चरित्रः पुरुषवरो बभूव. सभ्याः ? इम एव श्रीसमर्थपदवीभूषणानां रामदासस्वामिनां तातचरणाः. वाचकाः ? कियद्भाग्यं खलु तत्रभवतः सूर्याजीपन्तस्य 'यत्स्वयमेव भगवान् मारुतिस्तदात्मजो भवितुमाचकांक्ष.

सोऽयं सूर्याजीपन्तो यदा द्वादशवर्षः संवृत्तः, तदाप्रभृत्येव स सूर्यमेवोपास्त. महाभागाः ! ये खलु भगवद्भक्ताः साधवो भूता भविष्यन्ति च तेषामाबाल्यादेव परमात्मनि परा भक्तिर्भवत्येव.

एवंक्रमेण सूर्यनारायणं सेवमानस्य सूर्याजीपन्तस्य चतुर्विंशतिवर्षाणि व्यतीयुः. यद्यपि स ग्रामाध्यक्षतया यवनाधिपस्य सेवक एव, तथापि तस्य दैनिकः क्रमोऽन्यादृश एवासीत्. स च प्रतिदिनं ब्राम्हे मुहूर्ते समुत्थाय सूर्यमुपास्य अतिथीन् सत्कृत्यापराण्हकालेऽन्नग्रहणमकरोत्. रात्रौ तु राजकार्यम्.

तस्य च पत्नी परमसाध्वी गृहकर्मपरायणा रेणुकादेवी नाम आसीत्. सा तु पतिमेव देवतां मन्वाना सदैव तदीयसेवायां परमदक्षा आसीत्. युक्तमेवैतत् ! नहि पत्युर्ऋते स्त्रीणामन्या देवतेति सर्वाणि शास्त्राणि वदन्ति.

एवं सूर्योपासनां विदधत् सूर्याजीपन्तो मनस्यकरोत्—जीर्णं शरीरं क्षणभंगुरं. तस्मादिदं व्रतमुत्सर्गं कृत्वा समापनीयमिति. ततो रथसप्तम्यां ब्राह्मणानाहूय भोजयामास. ब्राह्मणेषु च भोजनपरेषु सत्सु कश्चन वृद्धोऽतितेजस्वी स्वतेजसा पश्यतां चक्षूंषि दीपयन् ब्राह्मणः सूर्याजीपन्तस्य गृहमाजगाम. सूर्याजीपन्तोऽपि ब्राह्मणादरे दक्षः तं दूरादेव अवलोक्य प्रत्युज्जगाम.

अथ परमभक्त्या सूर्याजीपन्तेन पूजितः स विप्रश्रेष्ठः तं सूर्याजीपन्तं सानन्देन मनसाऽवदत् 'भो सूर्याजीपन्त ? अहमस्मि ब्राह्मणवेषधारी सूर्यः. तव निर्व्याजया भक्त्या सन्तुष्टोऽस्मि. ततोऽभिमतं वरं वद' इति. सूर्याजीपन्तस्तु निष्कामो न किमपि वव्रे. अथ स ब्राह्मणवेषधारी सूर्यनारायणः सूर्याजीपन्तस्य पत्नीं रेणुकादेवीं

समाहूय वरवरणार्थं जगाद. साऽपि सूर्याजीपन्तस्य पत्नी त्रैलोक्यवंद्यौ पुत्रौ ययाचे. तदानीं स वृद्धब्राह्मणः—मातः ? रेणुके ? तवोदरात् द्वौ पुत्रौ संभविष्यतः. प्रथमो मदीयांशात्. स च गृहस्थो भूत्वा वंशधरो भविष्यति. द्वितीयस्तु साक्षादेव मारुतिराजन्म ब्रह्मचारी भूत्वा सकलस्य अस्य सनातनधर्मस्य ग्लानिं विधूय पुनरिमं समुज्ज्वलयिष्यति. वत्स ? सूर्याजीपन्त ? त्वं न कमपि कामं कामयसे ? तथापि अहं स्वयमेव त्वदभीष्टं करोमि. आगामिन्यां रामनवम्यां तुभ्यं श्रीरामचन्द्रस्य दर्शनं भविष्यति इति. समभिधाय चैतत् तस्मिन्विप्रवरे तिरोहिते तौ दम्पती परं सुखं लेभाते.

अथाचिरादेव साध्वी रेणुका गर्भवती बभूव. यथोदयकाले सूर्यगर्भायाः पूर्वदिशः कान्तिर्भवति, तथैव पतिव्रताया रेणुकाया अप्यासीत्. ततः परिपूर्णेषु नवसु मासेषु सा सती पुत्रं तेजस्विनं शुभलक्षणमण्डितं सुषुवे. सूर्याजीपन्तोऽपि यथाशक्ति विहितदानधर्माचरणः तदीयं नाम 'गंगाधर'इत्यकरोत्. वाचकाः ? इम एव श्रीसमर्थचरणानां ज्येष्ठबन्धवः. अग्रे च परमभक्त्या 'रामीरामदास' नाम्ना विख्यातिं प्राप्ताः.





# (३) जन्मवृत्तं बाल्यलीलाश्च.

अथ शीघ्रमेव श्रीरामचन्द्रादेशं तथा भक्तानां मनोरथं च सफलीकर्तुं भगवान् मारुतिः अखण्डब्रह्मचर्योऽपि साध्व्या रेणुकायाः परमपवित्रे उदरे उवास. महाभागाः! वाचकाः! कियत्खलु भाग्यं सूर्याजीपन्तस्य तथा साध्व्या रेणुकायाश्च, श्रीसमर्थान् गर्भाशये धारयन्त्याः कियत्सामर्थ्यमिति च भवद्भिरेव ज्ञातव्यम्. अस्तु. ततः क्रमेण शुक्लपक्षसुधांशाविव वर्धमाने गर्भे सा रेणुकाऽन्यादृशेव बभूव. यदा तु तस्याः सखीजनः तां दोहदान् अपृच्छत् तदा सा प्रत्यवदत्—सदैव भयंकरे कानने स्थित्वा उग्रं तप आचरणीयं. सीतारामौ सम्यगुपास्यौ. जगति या इयं धर्मस्य ग्लानिर्दृश्यते सा दूरीकरणीया. श्रीरामसम्प्रदायो वर्धनीयः गोब्राह्मणप्रतिपालनं च कर्तव्यमित्यादिकं.

सखीजनस्तु तस्याः तानपूर्वान् दोहदान् निशम्य विस्मितः तां केनापि भूतेनाविष्टाममन्यत. सत्यमेव तत्! यतः त्रैलोक्यविलक्षणो रामभक्तो भूतराजो मारुतिः तस्या उदरे आसीत्. सखीजनश्च भीतः सर्वमिदं वृत्तं सूर्याजीपन्ताय अकथयत्. स च महान् भगवद्भक्तः सर्वं वृत्तं जानन्नपि लोकापवादं परिजिहीर्षू रामचन्द्रनामानं ज्योतिर्विदं समाहूय तस्मै भार्यामदर्शयत्. सोऽपि तत्त्ववित् तस्याः सर्वाणि लक्षणानि आलोच्य सानन्दः—नैष मानवो गर्भः किंतु दैवः, अयं च बालकः सर्वं जगत् उद्धरिष्यति इति प्रावोचत्.

अत्रान्तरे सूर्याजीपन्तस्य गृहे रामनवमीमहोत्सवः समारब्धः. मध्यरात्रे सूर्याजीपन्ते भक्त्या हरिकीर्तनं कुर्वति सति कश्चन ग्रामसेवकः समागत्याब्रवीत्. स्वामिन्? यवनाधिपतेर्द्वौ सेवकौ यवनौ समागत्य ग्रामीयन्यायशालायां तिष्ठतः. तौ च त्वां राजकार्यार्थं समाव्हयत इति.

तस्येदं दारुणं वचनं श्रुत्वा खिन्नो भगवद्भक्तः स सूर्याजीपन्तो महता कष्टेन राजकीयान् लेखान् गृहीत्वा समाजगाम. अपश्यच्च द्वौ यवनवेषधारिणौ तरुणौ श्रीरामचन्द्रदेवालयस्य पुरतः तिष्ठन्तौ. स च खिन्नो मनसि 'प्रथमतो मारुतेर्दर्शनं गृहीत्वा तत इमौ द्रष्टव्यौ' इति विचार्य मारुतिदेवालयं प्रविवेश. तं भगवन्तं मारुतिं प्रणमन् स सूर्याजीपन्तो यदा भूमौ निपतितः, तदा तत् सर्वं देवालयं केनचिदपूर्वेण तेजसा चकाशे. तच्च तेजः स्वचक्षुर्भ्यां द्रष्टुमशक्नुवन् स सूर्याजीपन्तो मुमूर्छे.

अथ संजातसंज्ञो यदाऽक्षिणी उद्घाट्य समन्तात् व्यलोकयत्, तदा किरीटकुण्डलमण्डितौ श्रीरामलक्ष्मणावेव अपश्यत्. भगवद्भक्तः सूर्याजीपन्तः तदपूर्वं दिव्यं तयोः स्वरूपं पर्याप्तं समवलोक्य कृतकृत्यो झटित्युत्थाय श्रीरामदेवस्य चरणकमले स्वहस्तपाशेन बबन्ध. अशोभत च तदानीं भगवच्चरणसरोजं सूर्याजीपन्तमस्तकाच्छादितं. ततः सूर्याजीपन्तं समुत्थाप्य श्रीरामदेवोऽब्रवीत्—वत्स? सूर्याजीपन्त? भवता भक्तिः कृता. परन्तु कमपि भगवद्भक्तं गुरुं विधाय तस्यानुग्रहः कुतो न संपादितः? इति. भगवत इदं भक्तिवशस्य प्रेममयं भाषणं निशम्य सन्तुष्टः सूर्याजीपन्तोऽपि 'नाथ! अस्माकं कुले परंपरया पैतृकोऽनुग्रहो ग्राह्य इत्यासीत् संप्रदायः. परन्तु

बाल्य एव मम तातपादा दिवमगच्छन्. तत एवाहमस्मि निरनु-ग्रहः. हे भक्तवत्सल ! दयाघन ! जगद्गुरो ! अनाथोऽहं भवतैव अनुग्राह्य' इति विज्ञापयामास.

विज्ञप्य चैवं तूर्ष्णीभूते सूर्याजीपन्ते दयाघनो रामः त्रयोदशाक्षरं मंत्रं समुपदिश्य ताम्रमयीं स्वप्रतिमां तस्मै ददौ. अन्तर्दधे च.

तं च भगवतः कृपाप्रसादं गृहीत्वा धन्यः स सूर्याजीपन्तो यदा तौ यवनौ द्रष्टुं ग्रामीयन्यायशालामाजगाम तदा तत्र तौ नापश्यत्. तेन विस्मितः स तत्र स्थितान् सेवकानपृच्छत्'अत्र कावपि राजपुरुषावागतौ किमिति.' तेऽनभिज्ञा 'नागता अत्र केऽपि' इत्यब्रुवन्. तदानीं सूर्याजीपन्तस्तु तौ श्रीरामलक्ष्मणौ तं ग्रामसेवकं मारुतिं तर्कयन् स्वकल्याणार्थं भगवतः क्लेशो जात इत्यात्मानमधन्यं मन्यमानः तद्दिनमारभ्य राजकार्यं हातुं निरचिनोत्. ततो गृहमागतः स सूर्याजीपन्तः सर्वं वृत्तं स्वश्यालाय तथा स्वपत्न्यै निवेदयामास. तौ तु तद्वृत्तं समाकर्ण्य स्वजन्म सार्थममन्येताम्. ततश्च राजकार्यं त्यक्तुं कृतनिश्चयः स सूर्याजीपन्तः सत्वरं समुत्थाय स्वलेखनीं तथा मषीपात्रं श्रीरामदेवस्य पुरतो निधाय कृतशपथो हरिकीर्तनानन्दमग्नो बभूव.

एवंक्रमेण अतीतेषु केषुचिद्दिवसेषु साध्वी रेणुका खगुणभूतब्रह्मपरिमिते १५३० शकीये संवत्सरे चैत्रमासस्य शुक्लनवम्यां मध्यान्हसमये सनातनधर्मपालकं जगदुद्धारकं द्वितीयं पुत्रं प्रासूत. सूर्याजीपन्तस्तु वार्षिकरामनवमीमहोत्सवे मग्नः तत् पुत्रजन्मवृत्तं निशम्य ननन्द. समाप्ते जातकृत्ये स बालवेषधारी

मारुतिः नारायणनाम्ना व्यपादिश्यत. नारायणश्च निसर्गत एव अतितेजस्वी पश्यतां जनानां चेतांसि मोहयामास.

अथैकदा तौ नूतनौ बालकौ गृहीत्वा साध्व्या रेणुकया समं सूर्याजीपन्तो महान्तं भगवद्भक्तमुकुटमणिं एकनाथं वंदितुं पैठणनगरं जगाम. यदा च ते सर्वेऽपि पैठणनगरात् क्रोशमात्रमागताः. तदा स्वयमेकनाथस्वामिनः अनेकैः सच्छिष्यैः परिवृताः समाजग्मुः. दूरादेव तं द्विवर्षं बालं नारायणं वन्दमाना ऊचुः. एष न बालकः. किंतु भगवतो रामसेवकस्य अभिनवोऽवतार एव. अचिरादेव भूभारदूरीकरणाय नूतनः शिवावतारो भविष्यति, तं चैष धर्मस्थापनया साहाय्ययिष्यति इति. तच्च वृत्तं क्रमशोऽनेकजनमुखेषु संचरत् क्रमेण सार्वजनीनमभवत्. एकनाथस्वामिनोऽपि भगवद्भक्तं सूर्याजीपन्तं तथा परमसाध्वीं रेणुकां सहापत्याभ्यां बहून् दिवसान् स्वगृहे स्थापयित्वा स्वावासं प्रेषयामासुः.

एवंक्रमेण गच्छत्सु दिवसेषु ज्येष्ठो गंगाधरो यदोपनयनयोग्योऽभूत् तदा महतोत्सवेन बान्धवैः सह तस्योपनयनं सूर्याजीपन्तो व्यधत्त. अचिरादेव गंगाधरपन्तो गृहस्थाश्रमी बभूव. यदा स दशवर्षोऽभवत् तदा स भगवद्भक्तं सूर्याजीपन्तं पितरं विज्ञापयामास 'अनुग्रहो दीयताम्' इति. स तु सूर्याजीपन्तः 'नाहमनुग्रहं जानामि, येनैव वयमनुगृहीताः स एव त्रैलोक्यनाथो रामदेवो युष्माननुग्रहीष्यति' इति जगाद.

तस्यैतद्वचनं निशम्य कृतनिश्चयः स गंगाधरो देवालयं प्रविश्य दशदिवसपर्यन्तं कृतोपवासः तत्रैव रात्रंदिनं तस्थौ. वाचकाः? न केवलं पुस्तकविद्यया किंवा पाण्डित्येन भगवद्भक्ता भवन्ति,

किंतु तत्र पूर्वजन्मसुकृतमेवावश्यकम्, नहि पुण्यसंचयं विना तादृशी निश्चयबुद्धिरुदेति यस्यकस्यापि. नापि स्थविराणामप्यशक्यं वैराग्यं सुलभसौख्ये बाल्ये जायते.

अथ भगवान् दाशरथिः तस्य निरतिशयं वैराग्यं तथा भगवद्भक्तिं समवलोक्य सन्तुष्टः स्वयमेव तस्य पुरतः आविर्बभूव. उवाच च. गंगाधर ? किमपेक्ष्य त्वमत्र दशरात्रं तिष्ठसि ? इति. स च भक्तश्रेष्ठः सगद्गदं प्रत्युवाच—'नाथ ? अस्य दुःखनिधेः संसारस्य परिहाराय तवानुग्रहं वांच्छामि' इति. श्रीजानकीजानिः बालस्यापि तस्येदं भाषणं समाकर्ण्य सन्तुष्टः तस्मै अनुग्रहं ददौ. तेन कृतकृत्यः स गंगाधरः तस्मात् देवालयात् बहिरागतः सर्वं वृत्तं पितृभ्यां न्यवेदयत्. तावपि तदाकर्ण्य परं मुमुदाते.

पाठकाः ? अयमेव भगवदनुग्रहशाली गंगाधरः चिरं धृतवैराग्यः अगणितान् भगवद्गुणगणमण्डितान् ग्रंथान् लिलेख. अग्रे चैष एव "रामीरामदास'इति तथा'श्रेष्ठ'इति नामभ्यां प्रख्यातोऽभूत्.

अथ तत्रभवतां भगवद्भक्तानां सूर्याजीपन्तानां कनीयान् पुत्रो नारायणः शुक्लेन्दुरिव ववृधे. स तु सदैव स्मेरमुखः न कदापि रुरोद. यदा तु स द्विवर्षो बभूव तदैव स सम्यगुवाच. यदा तु स पंचवर्षः संवृत्तः तदा प्रायः सर्वेषु वृक्षेषु समुन्नततटादिस्थानेषु उड्डीयमानः दुर्धरोऽभूत्. यदा प्रतिवेश्मिबालकैः दुर्बलैः सह कलहायन्ते स्म सबला बालकाः, तदा दुर्बलानां पक्षमवलंब्य सबलानशात्. तस्य तदुच्छृंखलं वृत्तमनभिमतं मन्यमानः सूर्याजीपन्तः तं पाठशालां प्रेषयामास. स तु मारुतेः अवतारः सर्वमेव तस्य गुरोः ज्ञानं वर्षाभ्यन्तर एव आत्मसादकरोत्. वाचकाः ! नैतदशक्यमिति

मन्तव्यं केवलं पुस्तकाक्षराण्यवलोक्य संपादितं ज्ञानं स्वयंसिद्धस्य ज्ञानस्य तुलां कथमारोहेत्. अस्तु. स गुरुरपि तमलौकिकबुद्धिमन्तं वीक्ष्य विस्मितः तं स्वगृहं प्रैषयत्. एकदा बालक्रीडापरे नारायणे माता रेणुका तमुवाच. नारायण ! नाधुना त्वं बालः किंतु अतिक्रान्तबाल्यः पुरुषः. अतः त्वया अद्यप्रभृति गृहचिन्ता कार्या. रामनवमीमहोत्सवस्तु समागतप्रायएव. गृहे तु न पर्याप्तमन्नं. तस्मात् तात ! क्रीडामुत्सृज्य संसारचिन्तां वह इति. नारायणस्तु मातुरिदं वचनं श्रुत्वा सहासं प्रत्यवदत् 'गेहे प्रभूतं धान्यमस्ति. त्वं तु वृथैव चिन्तां करोषि' इति. तस्येदं वचनं परिहासमूलं मन्वाना क्रुद्धा साध्वी रेणुका जगाद 'क्वास्ते धान्यं ? दर्शय. धान्यागारे केवलं द्वित्रदिनपर्याप्तमेव धान्यं विद्यते. तच्च कीटकापसारणार्थमद्यैव आतपे निधित्सितं. आगच्छ ? तच्च धान्यागारादुद्धृत्य देहि. अहं च तत् अंगणे पटस्योपरि प्रसारयिष्यामि' इति.

मातुरिदं सकोपं वचनं श्रुत्वाऽपि स्मयमानः नारायणः तामनुसरन् धान्यागारमवततार. अवतीर्य च क्रमेण नारायणे धान्यं समुद्धृत्य मात्रे ददति सति धान्यमीदृक् ववृधे यत् तदुद्धृतधान्यग्रहणे साध्वी रेणुकैव असमर्था बभूव. नतु धान्यं समाप्तं. तं च धान्यराशिमपारमनन्तं वीक्ष्य विस्मयमाना माता रेणुका तूष्णीमेव तस्थौ न किंचिदपि उवाच.

एवमेवैकदा रामनवमीमहोत्सवे प्रचलिते प्रतिदिनं ज्येष्ठबन्धुः गंगाधरः समागतान् ब्राह्मणान् अभोजयत्. अयं नियमः श्रीसमर्थानां वंशे पारंपर्यागत एव. ततश्चैकस्मिन् दिने गृहे न दधि नापि तक्रमासीत्. तक्रं विना ब्राह्मणभोजनं सम्यक् न भवेत् इति

चिन्तयन्ती साध्वी रेणुका श्रीनारायणं श्वो ब्राह्मणभोजनं तक्रं विना स्यात् इति प्रावोचत्. तस्याश्चेदं वचनमाकर्ण्य सस्मितमुखकमलो नारायणः 'मातः ? चिन्ता न कार्या ! श्वोऽवश्यमत्युत्तमं तक्रमागमिष्यति' इति प्रत्युवाच. सा च धान्यसंपादने तस्य दृष्टसामर्थ्या श्रद्धधाना नाधिकं किमपि अवोचत्. अथ सा महति प्रभाते समुत्थिता श्रीरामदेवचरणारविन्दं नमस्कृत्य महानसद्वारं समुद्घाट्य अन्तः यदा पश्यति तदा नूतनानि मृद्भाण्डानि कानिचित् दधिपूर्णानि कानिचित् तक्रपरिपूर्णानि आलोकयामास. सा च सर्वमेवेदं रामदेवकृपाफलमिति मन्यमानाऽधिकमेव तद्भक्तिं चकार.

प्रियवाचकाः ? सामान्यतो ग्रंथकारस्य रीतिरेवेदृशी यत् लिख्यमानचरितप्रधाननायकस्य तथोत्कर्षः आबाल्यात् वर्णनीयः येन तस्य चरितं समुज्ज्वलं भवेत्. स च वृत्तान्तः सत्यो वा ऽस्तु मिथ्या वा ? न तत्रादरः क्रियत इति. प्रायः सर्वेषां कवीनां विषये ईदृशः प्रकारः सत्यएव, तथापि भगवद्भक्तानां विषयेऽलौकिककार्यविधानस्य दरीदृश्यमानत्वेन तेषां चरितेषु वर्ण्यमाना ईदृशा विषयाः केवलं कविकल्पनारूपा इति वक्तुं नाहं प्रभवामि. सज्जनाः ! पाठकाः ! यूयं किं न पश्यथ जगतीतलेऽगणितसेनाबलसमन्वितैः अपारकोशागारसहायैः अलौकिकमतिशालिमंत्रिगणसेवितैः शूरैः भूपालैरपि दुष्कराणि कार्याणि केवलं काषायवस्त्रधरैः भगवद्भक्तैः कृतानि ? बान्धवाः ? चरित्रेषु कविकल्पना नास्तीति नाहं ब्रवीमि किंतु भगवद्भक्तचरित्रेषु सा न संभवतीति. यतो यावतः कल्पनाकुशलाः कवयः स्वकल्पनया पदार्थान् कल्पयन्ति ततोऽधिकानेव पदार्थान् स्वयं भगवद्भक्ताः कुर्वन्ति. अहं तु निश्चयेन ब्रवीमि ना-

स्त्यशक्यं किमपि भक्तानां, यतो भगवतोऽभेदभावं प्राप्तास्ते. अप्यस्ति जगति तत्? यत् भगवतोऽपि दुष्करं. अस्तु. प्रकृतमनुसरामः.

एवंक्रमेण गच्छति समये श्रीनारायणो यदोपनयनयोग्यो बभूव तदा तस्य पिता सूर्याजीपन्तः तदीयमुपनयनं महतोत्सवेन व्यधत्त. स निसर्गत एव बुद्धिमान् तेन वैदिकसंस्कारेण संस्कृतो मणिरिव अधिकं समुल्ललास. नारायणश्च उपाध्यायात् सर्वमेव वेदमधीत्य लौकिकीं विद्यां लेभे.

अथ नारायणो भगवत्कृपां विनाऽऽत्मनो जन्म व्यर्थं मन्यमानः परमभक्तं साक्षात् श्रीरामदेवेनानुगृहीतं स्वपितरमनुग्रहदानार्थमयाचत. स तु गंगाधराय यदवोचत् तदेव नारायणायाऽपि अगदत्. तेन निराशाजनिततीव्रवैराग्यः स स्वयमेव स्वोपास्यरामदेवदेवालयं प्रविश्य ध्यानमारभत. निर्निमेषं श्रीसीतापतिं ध्यायतः अन्नलेशरहितस्य नारायणस्य दश रात्रयो व्यतीयुः. ततश्च तस्य तादृशीं स्वनिष्ठां वीक्ष्य प्रसन्नो दयासागरो भक्तवत्सलो रामः स्वयं प्रकटीभूय त्रयोदशाक्षरपरिमितं महामंत्रं समुपदिश्य जगाद-वत्स? नारायण? नासि त्वं प्राकृतो जनः किंतु भगवद्भक्तमुकुटमणिः साक्षात् अंजनीसुतः. त्वं हि केवलं लोककल्याणाय सनातनधर्मरक्षणाय विशेषतश्च भूभारहरणाय अवतरिष्यतः शिवांशसंभवस्य श्रीशिवराजस्य साहाय्यविधानाय मानवीं तनूमास्थितोऽसि. तस्मात् त्वया प्राकृतजनवत् न संसारे मन आधेयम् इति. उक्त्वा चेत्थं तिरोभूते भगवति सीतानाथे नारायणः तदाज्ञां शिरसा धृत्वा तस्माद्देवालयात् निर्गत्य गृहं

आजगाम. अकथयच्च सर्वं वृत्तं पितृभ्याम्. तौ च ज्येष्ठं गंगाधरं तथा कनिष्ठं नारायणं साक्षात् रामचन्द्रेण अनुगृहीतं वीक्ष्य धन्यं मन्यमानौ कियन्तं हर्षं प्रापतुरिति वाचकैः स्वयमेव कल्पनयाऽवधारणीयम्. नाहं तत् लिखितुं प्रभवामि.





# ( ४ ) वैराग्यसम्पत्तिः

एवंक्रमेण सूर्याजीपन्तः स्वपुत्रौ अलौकिकज्ञानसंपन्नौ वीक्ष्य सन्तुष्टः सफलजन्मा योग्यकाले दिवमारुरोह. दिवं गते स्वपितरि तद्वियोगदुःखाकुलां स्वमातरं साध्वीं रेणुकां सान्त्वयन्तौ तौ सर्वं लौकिकं व्यवहारमकुरुताम्. प्रायः सर्वेषु सांसारिकेषु कृत्येषु श्रीगंगाधरोऽतीव वैराग्येण अवर्तत. नारायणस्तु संसारनाम्नाऽपि शून्यः सर्वमेव कालं भगवद्भक्त्यैव यापयामास.

एवं गच्छति काले माता रेणुका स्वपुत्रं नारायणं विवाहयोग्यं मन्वाना तस्य विवाहविधानार्थं ज्येष्ठं पुत्रं गंगाधरं चोदयामास. तां च नारायणविवाहोद्यतां नारायणस्य हृदयं वैराग्यं संसारविद्वेषं च विजानन् स बहुशः संबोध्य अस्मादुद्यमात् निवर्तयितुं प्रायतत, परन्तु यशो न लेभे. सा तु तद्विवाहविधाने दृढाग्रहा श्रेष्ठं गंगाधरमेव नानादूषणैः अदूषयत्. नारायणं च स्वयमुपदेष्टुं समारभत. नारायणोऽपि तदीयां मनःप्रवृत्तिं ज्ञात्वा खिन्नः कथमपि विनयेन स्वाभिलषितं निवेदयामास. यथा यथा तस्या विवाहविषयक आग्रहः समवर्धत तथा तथा नारायणोऽपि स्पष्टमेव तां न्यषेधत्.

एकदा स्वमातुः आग्रहमत्यारूढं वीक्ष्य क्रुद्धो नारायणो गृहान्निर्गत्य महान्तं वटवृक्षं समारुह्य परमजवेन तस्यैव अधस्ताद्वर्तमाने महाह्रदे आत्मानं पातयामास. प्राविशच्च तदीयं गभीरं तलं. तत्र च निरुद्धश्वासो योगसमाधिमास्थाय सुखेन सुष्वाप.

इतश्च तं जलपतितं सम्प्रेक्ष्य साक्रोशं धावन्तो जनाः क्षणादेव तमपश्यन्तो नारायणं जलमग्नमुत्प्रेक्षमाणाः सर्वमेव तद्वृत्तं मातरम-

ब्रुवन्. माता रेणुका तु तद्वृत्तमाकर्ण्य दग्धश्रोत्रेव मूर्ध्नि अशनिना ताडितेव मूर्च्छन्ती चुक्रोश. तामाक्रोशन्तीं नयनजलक्लिन्नमुखीं जननीं सान्त्वयन् श्रीगंगाधरोऽवोचत्-मातः ? नास्ति शोकस्य कारणं ! नारायणः सुखमिहैव आस्ते. तं च त्वं सदैव विवाहाय प्रेरयसि. स तु परिणेतुं नेच्छति. आजन्म ब्रह्मचार्येव स्थित्वा भगवतः श्रीदशरथतनयस्य भक्तिः करणीयेति तस्याभिलषितं. तस्मादेव स ह्रदनिमज्जनमिषेण निभृतं तिष्ठति. यदि च त्वं नाहं तं विवाहार्थं किमपि वक्ष्यामि इति प्रतिजानासि, तदाऽहमिदानीमेव तमानेष्यामि इति. इदं च गंगाधरस्य भाषणं निशम्य पुत्रप्रेमपरवशा सा रेणुकाऽनन्यगतिका सर्वं तदुक्तमंगीचकार. ततो गंगाधरः समं मात्रा रेणुकया तथाऽन्यैः सज्जनैः तस्य ह्रदस्य तीरमाजगाम. यदा तु श्रेष्ठो गंगाधरो नारायणमुद्दिश्य 'नारायण ! अत्रागच्छ. नैषा माता त्वां पुनः विवाहार्थं वदिष्यति' इति उच्चैरब्रवीत्, तदानीमेव नारायणो जलमुपरि समागतो मातृचरणारविन्दमिलिन्दो बभूव. तं चाक्षतशरीरं विलोक्य माता रेणुका परं ननन्द. तं गृहीत्वा गृहमाजगाम च.

अथ अतीतेषु कतिपयदिवसेषु सा रेणुका पुनरपि उपाध्यायमुखेन नारायणं विवाहार्थं चोदयामास. उपाध्यायस्तु मृत्पिण्डबुद्धिः सर्वानेव जनान् समान् मन्यमानः केवलं ग्रंथाभ्यासजनितेन संस्कारेण लब्धज्ञानलेशः तस्य आजनिसिद्धस्य नारायणस्य मनो विवाहविषये प्रवर्तयितुं प्रायतत. नारायणस्तु इदानीं गृहवासमेव निराकर्तुमिच्छुः मातरमेव पप्रच्छ-अम्ब ? किं मया कर्तव्यमिति. सा तु तदाशयमजानन्ती 'विवाहः करणीयः, केवलमन्तःपटधारणपर्यन्तमेव त्वया स्थातव्यम्. अतः परं सर्वं कृत्यमहं करिष्यामि. न त्वया तदर्थं चिन्तालेशः करणीयः' इति जगाद.

तस्या इदं वचनं समाकर्ण्य कृतनिश्चयो नारायणः 'तव वचनं करिष्ये' इत्यवोचत.

अथ तं स्वनियोगवर्तिनं विवाहोद्यतं वीक्ष्य आत्मानं कृतकृत्यां मन्यमाना माता रेणुका ज्येष्ठेन पुत्रेण सह सोत्साहं विवाहसन्नाहमकरोत्. श्रेष्ठो गंगाधरः तदभिप्रायं जानन्नपि तूष्णीमेव सर्वं कार्यं व्यधात्. अचिरादेव च तत् सूर्याजीपन्तस्य गृहं नानाप्रदेशेभ्यः समागतैः आप्तेष्टजनगणैः परिपूर्णमशोभत. प्राप्तेषु सर्वेषु बान्धवेषु सा रेणुका सुमुहूर्तं विलोक्य सानन्दं स्वपुत्रस्य नारायणस्य विवाहार्थं वधूग्रामं गन्तुं प्रातिष्ठत. नारायणोऽपि सुन्दरालंकृतवाजिसमारूढ इतरजनवत् सस्मितवदनकमलः तेन आप्तजनेन अनुगतः कतिपयदिवसैः वधूग्रामं प्राप. क्रमेण च सर्वे मधुपर्कादयो विधयः समजायन्त. सर्वेऽपि वरसंबन्धिनो जना वधूसंबन्धिभिः सानन्दममीलन्.

द्वितीये दिने प्रातरुत्थाय नारायणः स्नापितानुलेपितो नूतनानि वस्त्राणि परिधाय सौवर्णैः अलंकारैः अलंकृतः महताऽऽनन्देन वधूवरणार्थं वधूगृहं जगाम. तत्र गत्वा पौर्वकालिके सर्वस्मिन् विधौ समाप्ते वधूमातुलः वधूं वरसंमुखीं स्थापयामास. ततश्च सर्वे ब्राह्मणाः 'शुभमंगलसावधान'इति वाक्यमुच्चैः उद्घोषयन्. नारायणस्तु तद्वाक्यं कर्णे कृत्वैव 'अहमस्मि सावधान एव! तथापि यतः एते वैदिका ब्राह्मणाः सावधानमेव मां सावधानो भवेति वदन्ति तस्मादस्ति अत्र किमपि महत् भयं. अतोऽस्मात् स्थानादपसरणमेव वरं' इति मनसा विचिन्त्य महता वेगेन मण्डपात् अपससार.

अपसृते तु वरे सर्वे वरपक्षीयास्तथा वधूपक्षीयाश्च जना आश्चर्यमग्नाः क्षणमात्रं स्तब्धा एवाभवन्. द्वितीयक्षणे लब्धसंज्ञाः

सर्वत्र तं समन्वैषयन्. कुत्राऽपि तमलब्ध्वा निराशाः पुनरपि तत्रैव समाजग्मुः. साध्वी रेणुका तु जनलज्जापुत्रवियोगदुःखाकुला कियतीं यातनां लेभे तत् वाचकैर्मनसैव अवधारणीयम्.

तां शोकाकुलां वृद्धां स्वमातरं महता प्रयत्नेन सान्त्वयन् ज्येष्ठो गंगाधरः स्वगृहमाजगाम. तत्र च नानाविधानि पुण्यकर्माणि कुर्वन् भगवद्भक्त्या च कालं यापयन् 'भक्तिमाहात्म्यादि'विविधग्रंथान् विरचयन् महतीं ख्यातिं तथा श्रेष्ठपदवीं च लेभे. वधूपिता तु शास्त्रकोविदानां ब्राम्हणानां सभां कृत्वा तदनुमत्या तस्याः कन्याया द्वितीयं विवाहं चक्रे. माता साध्वी रेणुका च नारायणवियोगदुःखदग्धहृदयापि सर्वमिदमनित्यं जगदिति भूयोभूयो गंगाधरेण बोधिता भगवद्भक्तिमेव अधिकामकरोत्.





# (५) उपासनासिद्धिः

संसारसर्पभयभीतश्च नारायणो विवाहमण्डपात् तथा पलायितो यथा तं ग्रहीतुं केऽपि नाशक्नुवन्. स तु प्रथमतः स्वनिवासग्रामं समागत्य अतिविशालस्य वटवृक्षस्य कोटर आदिनत्रयमुवास. अत्रावस्थानं पुनरपि मातृप्रेमपाशबन्धकारणमिति मत्वा स नाशीकक्षेत्रं जगाम. तत्र च जगद्वंद्यरामचन्द्रचरणारविन्दपरिपूते, अतिनिर्मलगोदावरीप्रवाहसालंकृते, निखिलजनजननीजनकतनयाकोमलपदकमललांछिते, सकलसज्जनादर्शीभूतसच्चरित्रखनिलक्ष्मणवृत्तस्मारके, अतिरमणीयवृक्षराजिमण्डितलताकुंजपरिदृश्यमानमृगबालकक्रीडामनोहरे, पंचवटीक्षेत्रे तपः तप्तुमारभत. यद्यपि सन्ति नानाविधानि तपांसि तथापि ब्राम्हणस्य गायत्र्येव मुख्या इति मत्वा स प्रथमतो गायत्रीपुरश्चरणमेव कर्तुमारेभे. समारब्धे तपोऽग्रेसरे गायत्रीपुरश्चरणे नारायणः केवलं मध्याह्नकाले गृहस्थगृहाणि गत्वा माधुकरीं वृत्तिमवलंब्य लब्धमन्नं रामदेवाय निवेद्य अभक्षयत्. पुनश्च तप एवारभत. तदानीं तु तस्य वयो द्वाविंशतिवर्षाणि आसीत्. सर्वे च तत्रत्या जनाः केवलं द्वाविंशतिवार्षिकीं तस्य बालतपस्विनो दिव्यकान्तिजुषं मूर्तिं वीक्ष्य व्यस्मयन्त. केचन भावुका जनाः तं वैराग्यावतारमेव अमन्यन्त. एवं रात्रिंदिवं तपस्यतो नारायणस्य भूयान् कालः समतीतः.

एकदा भगवच्चरणारविन्दध्यानपरे नारायणे वृक्षस्य अधस्तात् बद्धपद्मासने तिष्ठति सति काचन षोडशवर्षदेशीया सौभाग्यवती

मृतं पतिमनुगन्तुकामा तेनैव पथा समाजगाम. तस्याश्च भर्ता तरुणो धनधान्यसम्पन्नो देशमुख्य एवासीत्. परन्तु स क्षयरोगेण पंचत्वमगात्. तं च देशमुखं दग्धुं बहवो जनाः समागच्छन्. सा च सती सौभाग्यद्रव्यालंकृतभालप्रदेशा तपस्विनं समाधौ मग्नं नारायणं समालोच्य संजातश्रद्धा शीघ्रमेव समीपमागत्य ववन्दे. नारायणस्तु पिहितनयनकमलः कंकणध्वनिमाकर्ण्य अनुमितसौभाग्यवत्यागमनः सहसा 'अष्टपुत्रा सौभाग्यवती भव'इत्याशिषं विततार. सा साध्वी तामाशिषं श्रुत्वा स्मेरमुखी 'स्वामिन्? अहमस्मि मृतं पतिमनुगन्तुकामा. ततश्च इयमाशीः अस्मिन् जन्मनि फलदा वा परस्मिन्' इति पप्रच्छ. नारायणश्च तस्या इदं वचनं निशम्य विस्मितो मनस्येव श्रीरामदेवं संप्रार्थ्य कमण्डलुस्थं तीर्थं तस्य मृतस्य गात्रे चिक्षेप. पतिते एव तस्मिन् तीर्थोदके स मृतः सुप्तवत् रामरामेति वदन् उदतिष्ठत्. अगदच्च 'एषैव मूर्तिः यमलोकमागत्य यमं मन्मोचनाय समाज्ञाप्य मां गृहीत्वा प्रत्यागता' इति. सा च पतिव्रता नारायणस्य चरणकमले शिरसि निधाय सानन्दा नानाविधां भक्तिमकरोत्.

तत्र मिलिता जना इदमाश्चर्यं वीक्ष्य विस्मिताः—'अहो? तपसः सामर्थ्यं. धन्योऽयं देशः यत्र च एतादृशोऽलौकिकतपःसामर्थ्यशालिनः तपस्विनोऽद्यापि निवसन्ति' इति ऊचुः. केचन 'समर्था भगवद्भक्ताः किं किं न कुर्वन्ति'इति प्रालपन्.तद्दिनमारभ्य सर्वेऽपि तत्रस्थाः जना नारायणं तन्नाम्नाऽव्यपदिशन्तः समर्थनाम्नैव व्यपादिशन्. अतो वयमपि अतःपरं तपःसामर्थ्यलब्धसमर्थपदवीकं तं नारायणं समर्थनाम्नैव व्यवहरिष्यामः.

ततश्च तौ दम्पती श्रीसमर्थान् षोडशोपचारैः संपूज्य तदाज्ञां गृहीत्वा स्वग्राममाजग्मतुः. सा सती यदा गर्भिणी भूत्वा पुत्रं प्रासूत तदा जातं तं तनयं गृहीत्वा समर्थानां समीपमागत्य 'युष्मत्प्रसादादयं संजातः. साम्प्रतं ग्राह्य एष'इति विज्ञापयामास. समर्था अपि तस्या भक्तिमवलोक्य सन्तुष्टाः प्रत्यूचुः. 'वयं केवलमरण्यवासिनः कथमिममुपाधिं सहेम. तत् भवत्यैव अयं संवर्धनीयः. यदा तु अस्योपनयनं भवेत् तदाऽयमस्मभ्यं समर्पणीय'इति. सापि तदाज्ञां स्वीकृत्य तेन बालकेन समं स्वभवनं समाययौ. अथ यदा सोऽष्टवर्षोऽभूत् तदा तं समर्थानां समीपं नीत्वोपनीय च समर्थेभ्यः समर्पयामास. समर्था अपि तमनुगृह्य तस्य नामधेयं 'उद्धवगोसावी'इति चक्रुः. अन्यानपि नव पुत्रान् सा साध्वी क्रमेण सुषुवे.

एवं क्रमेण अत्युग्रतपश्चर्यां कुर्वत्सु श्रीसमर्थेषु श्रीसीतानाथः स्वयमाविर्भूयावदत् 'अहमस्मि सन्तुष्टः त्वदीयया तपस्यया. अधुना दक्षिणापथं गत्वा तत्र भूभारहाराय समवतीर्णस्य शिवांशस्य शिवनृपतेः साहाय्यं विधेय'मिति. श्रीसमर्था अपि अमुं रामदेवनियोगं शिरसा गृहीत्वा 'पुरश्चरणं च समारब्धं, तच्च समाप्तकल्पमेव. तच्च समाप्य युष्मन्नियोगमनुवर्तिष्य' इति जगदुः. एवमनेकवारं संवृत्तं. एकदा मारुतिः स्वयमाविर्भूय सकोपं निजगाद-दक्षिणापथं गच्छेति प्रभुणा समाज्ञप्ता अपि यूयं तपोनिमित्तेन अत्रैव तिष्ठथ ? एतच्च न समीचीनम्. शीघ्रमेव गन्तव्यमिति. समर्थास्तु पुनरपि-गायत्रीपुरश्चरणं त्वरितं समाप्य गमिष्यामि. शास्त्रमपि प्रभूणामेव आज्ञां द्योतयति इति जगदुः.

अथ समाप्ते पुरश्चरणे द्वादशवर्षपर्यन्तं कठोरं तपः तद्धा संपादितालौकिकदिव्यतेजसः सामर्थ्यसंपन्नाः नानाविधानि तीर्थानि प्रथमं पर्यटितुं वांच्छन्तः श्रीसमर्थाः प्रथमं काशीक्षेत्रमाजग्मुः. आदौ च तीर्थाटनप्रारंभात् रामदेवः स्वयं प्रादुर्भूय काषायवस्त्राणि वितीर्य 'अयमेव संप्रदायो वर्धनीय' इति आज्ञापयामास. उद्धवगोस्वामी तु 'अहं युष्माभिः समं पृथ्वीपर्यटनार्थमागच्छामि' इति वदन् बद्धाग्रहो बभूव. श्रीसमर्थास्तु तं च 'त्वमसि बालः. नास्ति तव योग्यता तीर्थान्यटितुं. अत्रैव श्रीमारुतिं प्रतिदिनं सेवमानः तिष्ठ. अचिरादेव अहं प्रत्यागमिष्यामि' इत्युक्त्वा तत्रैव मारुतिं स्थापयित्वा स्वयं निरगच्छन्. काशीमागताः श्रीसमर्थाः प्रथमं पवित्रे अखिलपापनाशकारिणि भागीरथीजले स्नात्वा तथैव श्रीविश्वेश्वरं वन्दितुं श्रीविश्वेश्वरस्य देवालयं समाययुः. देवालयस्थाः विप्राः तान् काषायवस्त्रधारिणो वीक्ष्य 'अयं च कश्चन अब्राम्हणः' इति मन्यमानाः तान् देवालयप्रवेशात् निषिषिधुः. यदा च तं निषेधं स्वीकृत्य तत एव भगवन्तं विश्वेश्वरं नमस्कृत्य शान्तमनसः श्रीसमर्थाः प्रतिन्यवर्तन्त, तदा श्रीविश्वेश्वरस्य लिंगं देवालयात् तिरोदधे.

पूजका विप्रा यदा लिंगमेव नाद्राक्षुः, तदा परमदुःखाकुलाः श्रीसमर्थान् महायोगिनो मन्यमानाः सहसा समर्थचरणवन्दनाय धावन्तः समागमन्, यत्र श्रीसमर्था विश्वेश्वरदर्शननिषेधदुःखाकुला निषेदुः. तत्र च समागताः ते पूजकाः साष्टांगं प्रणिपत्य विश्वेश्वरदर्शनार्थमागन्तुं प्रार्थयामासुः. समर्था अपि दयाघनाः शीघ्रमेव आगत्य विश्वेश्वरं साक्षात्कृत्य प्रणेमुः. तस्मिन्नेव क्षणे तल्लिंगं पुनरपि स्वस्थानाधिष्ठितमभूत.

ततश्च अवशिष्टानि कानिचित् तीर्थानि वीक्ष्य तत्र मासपर्यन्तमूषुः. ततश्च निर्गत्य जगन्नाथस्य पुरीं समागत्य जगन्नाथस्य दर्शनं गृहीत्वा तेनैव मार्गेण रामेश्वरं लंकां च गत्वा तत्र मारुतिना समं बिभीषणकृतमादरातिथ्यमादाय पुनरपि दक्षिणापथस्थानि 'आदिरंग, मध्यरंग, अन्तरंग' इत्यादीनि तीर्थानि पश्यन्तः क्रमेण करवीरक्षेत्रमागत्य पुनरपि पंचवटीक्षेत्रं प्राप्य सर्वां पृथ्वीप्रदक्षिणां समापयामासुः.

वाचकाः ? इदानींतनाः केचन वदन्ति नास्ति तीर्थाटनस्य किमपि फलं. केवलं द्रव्यव्यय एव. तदपेक्षया दीनाभ्यागतानां सत्कारकरणमेव अधिकं फलप्रदमिति. सत्यमेव तेषां मतमिदं. इदानींतनाग्निशकटमार्गेण तीर्थयात्राकारिणां तीर्थयात्रां वीक्ष्य. केवलं पाषाणवत् एकस्मिन् स्थानेऽग्निशकटमारुह्य द्वित्रदिनपर्यंतं तत्रैव स्थित्वा कस्मिन्नपि स्थले ततोऽवतरणे को वा लाभः ? का वा चित्तस्य प्रसन्नता ? कुतो वा तीर्थयात्राप्रधानफलस्य लोकस्थितिनिरीक्षणरूपस्य प्राप्तिः ? तस्मादग्निशकटेन तीर्थयात्रा नाम केवलं गतानुगतिकत्वमन्धपरंपरैव.

प्रियवाचकाः ? तीर्थयात्रायाः प्रयोजनमेव नास्ति केवलं निष्फलैव सेति न ममाशयः. अस्ति तु तीर्थयात्रायाः परमं विविधजनानां परस्परविरुद्धनानाचारनिरीक्षणं नाम लोकोत्तरं प्रयोजनं. ये भगवद्भक्ताः साधवः ते लोककल्याणायैव प्रादुर्भवन्ति इति निर्विवादम्. यदा च लोकोद्धारः कर्तव्यः तदा प्रथमतः तेषां स्थितिः प्रत्यक्षीकरणीयेति न्यायप्राप्तमेव. ऋते लोकस्थित्यवलोकनात् कीदृग्मीत्या तेषामुद्धारः कर्तव्य इति अशक्यं निश्चेतुम्. अतएव लोककल्याणदक्षाः प्राचीनाः साधवः सर्वां पृथ्वीं पर्याटन् ! यथा श्रीशंकराचार्याः, श्रीवल्लभाचार्याः, तथाऽन्येऽपि.

तीर्थयात्राया द्वितीयं च प्रयोजनं तीर्थयात्राकारी कूपमण्डूकवत् संकुचितां वृत्तिं त्यजति. यथा हि कूपस्थो मण्डूकः स्वकूपमेव सर्वं जगत् मन्यते तथाऽदृष्टनानादेशवृत्तो मानवोऽहमेव विद्वान् इति मन्यते. प्रियपाठकाः ? यदि यूयं वदिष्यथ केवलं यद्येतावदेव प्रयोजनं तीर्थयात्रायाः तदा तेनैव उद्देशेन पर्यटनीयं. किं स्थलविशेषेषु तीर्थत्वकल्पनयेति. तदाऽहं ब्रवीमि सत्यं.! परन्तु यथा सर्वत्रेश्वरास्तित्वं तन्मूलिकामेव भूतदयां च भावयतां नः आर्याणां या स्थलविशेषेषु परमेश्वरास्तित्वभावनोत्कटत्वमूलिका या तीर्थत्वभावना तस्याः प्रकृतसाध्यसिद्धौ उपयोगः, न तथा केवलं देशपरिस्थित्यवलोकनार्थं पर्यटतां जनानां विषयतृष्णावशीकृतानां. स्थाने स्थाने वर्तमाना विचित्रा विषयाः तीर्थत्वभावनारहितान् तान् वशीकुर्युः. स्वाभाविकीं प्रवृत्तिं विषयेषु तीर्थत्वकल्पना रुणद्धि. नहि संभवति कामुकस्यापि आस्तिकस्य देवालये परमात्मास्तित्वं भावयतस्तत्रैव पापप्रवृत्तिः. अस्तु. प्रकृतमनुसरामः.

समर्थास्तु पंचवटीक्षेत्रं प्राप्य स्वशिष्यं उद्धवं वीक्ष्य सानन्दाः शीघ्रमेव रामचन्द्रदेवालयं गत्वा दाशरथिं संपूज्य सर्वं पृथ्वीप्रदक्षिणापुण्यं सीतानाथाय अदुः. यदा च श्रीसमर्थैः मनसा तथा संकल्प्य जलं हस्ते गृहीतं तदा श्रीकौसल्यानन्दनः स्वयं तदुदकं ग्रहीतुं स्वहस्तं समुन्नमयामास. गृहीत्वा च तत् रामचन्द्रः स्वयं समर्थान् अवदत्—गृहीतं मया भवदीयं पुण्यं. प्रीतोऽस्मि. इतः सत्वरमेव कृष्णातीरं गत्वा तत्र यवनशासकस्य शिवनृपतेः साहाय्यं विधाय सनातनधर्मोद्धारः कर्तव्य इति. श्रीसमर्थाश्च स्वप्रभोः इमामाज्ञां शिरसा स्वीकृत्य 'गंगां प्रदक्षिणीकृत्य मातृदर्शनं विधाय

गमिष्यामि' इत्यवोचन्. श्रीसीतापतिरपि तथास्तु इत्यभिधाय तिरोदधे. ततः श्रीसमर्थाः क्रमेण विविधानि स्थानानि अवलोकयन्तः सर्वभूतलविख्यातं नानाविद्वद्गणमण्डितं एकनाथस्वामिनिवासपवित्रीभूतं परमपवित्रं पैठणनगरं समाजग्मुः. तत्र च प्रतिदिनं गंगायां स्नात्वा माधुकरीं वृत्तिमुपजीव्य सायंकाले वृन्दावनस्य समीपे हरिकीर्तनं विधेयमिति समर्थानां नित्यक्रम आसीत्.

एकदा तु संध्योपासनार्थं गंगायाः तीरे समुपविष्टेषु ब्राम्हणेषु समर्थाअपि तत्रागच्छन्. तदानीं तेषां वेषः ईदृश आसीत्—मस्तके जटापटलं, कण्ठे माला, कुक्षौ कमण्डलुः काष्ठफलकं च, हस्ते लक्ष्यभेदकं रज्जुमयं यंत्रं ( गलोल ) इति. एतादृशमपूर्वं वेषमवलोक्य विस्मिताः ते ब्राम्हणा उपहासबुध्या 'भो भगवन् ? कोऽयमाश्रमः' इति अपृच्छन्.

समर्थास्तु निःशंकं 'ब्रम्हचर्याश्रमः, श्रीराम उपास्यदेवता, आचारश्च स्वेच्छारूपः' इति प्रत्यवदन्. श्रीसमर्थानामलौकिकं तेजो वीक्ष्य स्तब्धा अपि ते ब्राम्हणाः पुनरपि 'हस्ते किमिदं ? अस्ति स्वल्पोऽप्यभ्यासः' इति सोपहासं पप्रच्छुः. अस्ति युष्मत्कृपया इत्युक्ते ते वियति उड्डीयमानं खगं प्रदर्शयित्वा प्रदर्शयतु अत्रभवानभ्यासकौशलं' इति प्रत्यभाषन्त. विप्राज्ञा प्रमाणमित्युक्त्वा एकं पाषाणखण्डं गृहीत्वा तथा लक्षितो विद्धश्च स पक्षी क्षणादेव धरणितले पपात पंचत्वं प्राप च. तं च खगं मृतमवलोक्य सर्वे ब्राम्हणाः कोलाहलं कुर्वन्तः समर्थानाहुः. 'काषायवस्त्राणि धृत्वा हत्यां करोषि ! साम्प्रतं प्रायश्चित्तं गृहाण. नचेत्त्वं पतितः स्याः ! इति. ब्राम्हणानामिदं वचनमाकर्ण्य स्मेरवदनाः श्रीसमर्थाः तान् प्रत्यूचुः—विप्रदेवाः ?

युष्मदाज्ञयैव मयाऽयं खगो निहतः. तदहं कथं पातकी. अस्तु चैतत्. परन्तु कृते प्रायश्चित्ते मदीयं पापं नंक्ष्यति ? इति. कथं न नश्येत् यदि विधिवत् प्रायश्चित्तं क्रियते ? शास्त्रं तु सर्वथा सर्वेषामपि नः प्रमाणमेवेति ब्राम्हणा यदाऽवदन् तदा श्रीसमर्था यथाविधि प्रायश्चित्तमकार्षुः. समाप्ते च प्रायश्चित्तविधौ समर्था ब्राम्हणान् बभाषिरे—'भूदेवाः ? अहं च निष्पापः संवृत्तः. परं चैष खगोऽद्यापि नोज्जीवति' इति. द्विजा आहुः—'कथमस्मिन् पापमये कलियुगे एतद्भविष्यति. सत्ययुगे एतदभवत् इति शृणुम' इति. श्रीसमर्थाश्च तदानीं 'यदि चैष नोज्जीवति तदा कथमहं निष्पापः संवृत्त इति श्रद्धार्हं ? भवतु. अहमेव तावदेनमुज्जीवयितुं प्रयत' इत्युक्त्वा तीर्थमादाय रामनाम्ना तं मृतस्य खगस्य देहं सिषिचुः. अचिरादेव हि स खगः सुप्तोत्थित इव पक्षौ कम्पयन् उड्डीय दिवं जगाम. ब्राम्हणाश्च तत् वीक्ष्य आश्चर्यसमाकुलाः समर्थान् अलौकिकप्रभावान् मन्यमानाः साष्टांगं प्रणिपेतुः. श्रीसमर्थाश्च प्रणिपततः तान् निवार्य 'अहमस्मि ब्राम्हणानां दासः. युष्मत्कृपयैवेदं कृतं, नास्त्यत्र कश्चन विशेष' इत्युक्त्वा सर्वान् तान् नमस्कृत्य स्वावासमाजग्मुः.

ततश्च निर्गत्य श्रीसमर्थाः स्वमातुः तथा श्रेष्ठानां च दर्शनार्थं जांबग्राममागच्छन्. माता रेणुका पुत्रवात्सल्यदुःखिता नारायणस्य दर्शनार्थं रात्रिंदिवं दुःखायते स्म. यद्यपि श्रेष्ठा भूयो भूयः तत्त्वोपदेशेन सान्त्वयन्तः तस्याः शोकं न्यूनीकर्तुमहर्निशं प्रायतन्त, परन्तु स्त्रीस्वभावानुरूपं सा सदैवाशोचत्. साम्प्रतं तु सा साध्वी शोकविह्वला वृद्धा नेत्रविहीना चासीत्. समर्थाश्च स्वजन्मग्रामं प्राप्य प्रथमतो मारुतेः दर्शनं गृहीत्वा स्वगृहं गत्वा 'जयजयरघुवीरसमर्थ

इति घोषणां चक्रुः. तं च रामनामघोषं श्रुत्वा देहलीस्था माता रेणुका स्वस्नुषामब्रवीत्—वत्से ? नूनं कोऽपि तीर्थप्रवासी समागतः. देहि तस्मै भिक्षामिति. मातुरिदं वाक्यमाकर्ण्य श्रीसमर्थाः 'नायं साधुः भिक्षेच्छुः किंतु अयमत्रैव स्थातुमिच्छति' इत्युक्त्वा मातृचरणौ ववन्दिरे. सा तं स्वरध्वनिं प्रत्यभिजानन्ती 'हन्त ? नारायणः समायातः' इत्युक्त्वा प्रेम्णा प्रसारिताभ्यां हस्ताभ्यां श्रीसमर्थान् आलिलिंग. श्रीसमर्था अपि तदकृत्रिमप्रेममयं सुकृतैकलभ्यं मात्राश्लेषसुखं समनुभवन्तः स्वाङ्कमध्यारोप्य मुखकमलं स्पृशन्त्या मातुः सर्वपरिश्रमापहारकं हस्तस्पर्शं लब्ध्वा समानन्दुः. साध्वी रेणुका समर्थानां शिरसि जटापटलं बुध्वा नानाविधं प्रश्नजातमपृच्छत्.

अथ सा समर्थानब्रवीत्—नारायण ? त्वं संप्रति युवा संवृत्तः. अलौकिकं दिव्यं तेजश्च बिभर्षि. परन्तु नेत्रहीनाऽहं न किमपि द्रष्टुं पारयामि. दुर्दैवं मे इति. मातुरिदं खेदवचनं निशम्य दुःखिताः श्रीसमर्था यदा स्वहस्तकमलेन तदक्षिणी पस्पर्शुः, तदैव सा पूर्ववत् सम्यक् सर्वमपश्यत्. साध्वी रेणुका प्रत्यक्षमनुभूतपुत्रसामर्थ्या तादृशालौकिकपुत्रशालिनीमात्मानं धन्यां मेने. अवोचच्च समर्थान्—तात ? नारायण ? साधु कृतं. स्ववंशो दिव्येन यशसा धवलीकृतः. यदि त्वं मदीयं वचनं स्वीकृत्य पर्यणेष्यः तदा नैतादृशं तपःसामर्थ्यं अलप्स्यथाः. पुत्रार्थं खलु परिणयनं. तेन लौकिकी कीर्तिर्लभ्या. यदि च सा पुत्रं विनाऽपि लभ्यते तदा नास्त्यावश्यकताऽनेककष्टसंपाद्यस्य गृहस्थाश्रमस्य. वत्स ? प्रीताऽस्मि अनेन दिव्येन तपसा. चिरंजीव ? अस्य सनातनधर्मस्य ग्लानिं दूरीकुरु इति. एवंविधैः अनेकैः आशीर्वचनैः अभिषिक्ताः श्रीसमर्थाः मातुः समीपे कानि-

चित् दिनानि न्यवसन्. अथ गंगाप्रदक्षिणार्थमंबाया रेणुकायाः आज्ञां गृहीत्वा पुनश्च प्रदक्षिणीकृत्य गंगां पंचवटीं समागत्य श्रीकौसल्यानन्दनाय सर्वं प्रदक्षिणापुण्यं वितीर्य तेन दक्षिणापथं गन्तुं समाज्ञप्ताः कृष्णातीरमाजग्मुः.





# (६) साधुवरसमागमः धर्मोद्धारविचारश्च

यदा हि समर्थाः पंचवटीमागत्य कृत्स्नं गंगाप्रदक्षिणापुण्यं दाशरथिचरणकमलार्पणं चक्रुः तदा रामदेवः स्वयमाविर्भूय समर्थानाज्ञापयत्—नारायण ? शिसोदेकुले नूतनः शककर्ता शिवांशसंभवः शिवाजिनामा राजा संभूतः. स च बलोन्मत्तान् प्रशास्य गोब्राम्हणान् पालयिष्यति. स तु अस्मिन् कर्मणि साहाय्यकारिणं धर्मगुरुमपेक्षते. अहं च यावत्पश्यामि न त्वत्कृतेऽन्यः कश्चित् अस्मिन् कर्मणि समर्थः कुशलश्च. तस्मात् त्वमितो गत्वाऽन्यैः साधुवरैः सह मिलित्वा सर्वानुमत्या शिवनृपतेः लोकोद्धारकर्मणि साहाय्यं कुरु इति.

इमामाज्ञां शिरसि निधाय श्रीसमर्थाः प्रथमं कृष्णाया उद्गमस्थानं महाबलेश्वरं समागत्य तत्र चतुर्मासपर्यन्तमूषुः. तत्र चैकं हनूमतो देवालयं विरचय्य तत्र कृतनिवासाः बहून् शिष्यान् विदधुः. तेषु च आनन्दभट्टदिवाकरभट्टमहाबळेश्वरकरप्रभृतयः प्रमुखा आसन्.

अथ व्यतीतेषु चतुर्षु मासेषु विविधस्थलेषु स्वशिष्यान् विधित्सन्तः महाबळेश्वरात् प्रसिद्धं वाईक्षेत्रमागच्छन्. तत्रापि प्रथमतः कृष्णातीरे वर्तमानस्य महतोऽश्वत्थवृक्षस्य अधस्तात् स्थित्वा उपासनामारभन्त. यदा च तेषां तेजसा समाकृष्टा अत्रापि बहवो जनाः शिष्या अभवन्, तदा तत्रापि मारुतिदेवालयं विरचय्य श्रीरामदेवभक्तिं सर्वत्र प्रासारयन्. एवंक्रमेण माहुलीक्षेत्रेऽपि कृत्वा जरंडानामके पर्वते यत् प्राचीनं मारुतिदेवालयमासीत् तत्रैव ते न्यवसन्. तत्रापि प्रतिदिनमवर्धत तेषां शिष्यसमुदायः. जरंडापर्वते निवसतां

श्रीसमर्थानां शिष्यसमूहो यथा यथाऽवर्धत, तथा तथा नानादेशेभ्यः प्रतिदिनमगणिता जनाः समागत्य तद्दर्शनं विधाय सन्तुष्टाः स्वदेशेषु श्रीसमर्थगुणानुवादमगायन्. श्रीसमर्थानामिदं यशःस्तोत्रं निशम्य साश्चर्याः सानन्दाः तदानींतनाः साधुश्रेष्ठाः श्रीसमर्थानां दर्शनाय आगच्छन्.

प्रियवाचकाः ? इदं प्रायो दरीदृश्यते यत् यदा दुर्बला जनाः बलातिरेकलाभोन्मत्तैः अन्यैः जनैः पीड्यन्ते तदा ते दुर्बला जना ईश्वरं शरणं गच्छन्ति. स चेश्वरः सर्वेषु भक्तेषु विशेषतश्च अधिकारिषु भक्तप्रवरेषु प्रेरणां करोति. ततश्च ते भक्तश्रेष्ठा ईश्वरप्रेरणानुरूपं कार्यं कर्तुमारभन्ते. तच्च कार्यं बलोन्मत्तैः भूयोभूयः यथाशक्ति प्रतिहन्यते. परन्तु ते भगवद्भक्ताः तैः प्रतिहन्यमानमपि तत् कार्यं न जहति. बहवश्च जनाः सबलानां रोषपात्रीभूता नानाविधान् क्लेशान् अनुभवन्ति. एवंस्थिते तटस्थानां जनानां चेतांसि सबलान् पापीयसो द्विषन्ति. दुर्बलान् अनुकम्पन्ते. अचिरादेव तान्यपि जगदीश्वरस्य आज्ञानुरूपं प्रचलद्भिः भक्तप्रवरैः प्रारब्धेषु कार्येषु अनुकूलानि जायन्ते. एवंरीत्या क्रमेण सर्वेषु जनेषु अनुकूलेषु सत्सु अतिप्रबला अपि दुर्जनाः क्षणात् विनश्यन्ति. अत्र च रावणादयो निदर्शनम्.

उपरितनविवरणात् सुज्ञैः वाचकैः निर्णीतमेव स्यात् यत् संकटमग्नानां दुर्बलानां जनानां परमेश्वरशरणीकरणं विना नास्ति संकटोद्धारोपायोऽन्य इति. तदानीं तु निखिलोऽपि आर्यावर्तः यवनैः आक्रान्त आसीत्. कथं खलु अत्र तेऽवर्तन्तेति पूर्वप्रसंग एव प्रदर्शितम्. तदानीं च असंख्यगोहत्याभिः आर्यमहिलानां पातिव्रत्यनाशैः देवप्रतिकृतीनां ध्वंसैः उद्वेजिता आर्यावर्तवासिनो जना ईश्वरं

शरणमगमन्. तेन जगदीश्वरः स्वभक्तवरहृदयेषु तेषामुद्धारार्थे प्रेरणां चक्रे.

ते च भक्तप्रवराः श्रीरामदासस्वामिप्रभृतयः सर्वासु दिशासु समुत्पन्नाः साधुवरा एव. तेषां साधूनामन्तःकरणानि नाम ईश्वर-प्रतिबिंबग्राहीणि दर्पणान्येव. यथा हि बिंबे विद्यमानं चिह्नजातं दर्पणे प्रतिबिंबति तथैव ईश्वरेच्छादिकं सर्वं साधूनां हृदयेषु. तात्पर्यमिदमेव—सबलजनपीडितैः दुर्बलैः कृतां प्रार्थनां निशम्य करुणार्द्रो दयाघनः परमात्मा साधुद्वारा सर्वमिदं जगदुद्धरतीति.

ते च भक्तप्रवरास्तदानीं यवनाक्रान्ते सर्वस्मिन् आर्यावर्तेऽसंख्या अजायन्त तथापि प्राधान्येन श्रीसमर्थानां समये पंच भक्तश्रेष्ठा आसन्. ते च नामतो यथा—

| | ( निवासस्थानं ) |
|---|---|
| १ श्रीरामदासस्वामिनः | ( परळीदुर्गं ) |
| २ श्रीजयरामस्वामिनः | ( वडगांवग्रामः ) |
| ३ श्रीरंगनाथस्वामिनः | ( निगडीग्रामः ) |
| ४ श्रीआनन्दमूर्तिस्वामिनः | ( ब्रह्मनाळग्रामः ) |
| ५ श्रीकेशवस्वामिनः | ( भागानगरं ) |

प्रियवाचकाः ? यद्यप्येतत् श्रीसमर्थानां चरित्रं तथापि संक्षेपतस्तदनुषंगिणामुपरितनलिखितानां चतुर्णामपि साधूनां चरित्राणि निवेदयामि.

## ( श्रीजयरामस्वामिनः )

तत्रभवतां जयरामस्वामिनां जन्मभूमिः कात्राबाद इति दक्षिणापथस्थो महान् विभागः. तत्र 'भिकाजीपन्तदेशपाण्डे'नामकः कश्चन भगवद्भक्तो विप्रवरोऽवसत्. तस्य पत्नी कृष्णादेवी. इमावेव जयरामस्वामिनां पितरौ. बाल्य एव भिकाजीपन्तः स्वर्गं जगाम. तद्वियो-

गदुःखिता साध्वी कृष्णादेवी श्रीपंढरपुरक्षेत्रं विठ्ठलेशदर्शनार्थं जयरामस्वामिभिः समाजगाम. तत्र विठ्ठलेशं वीक्ष्य विनष्टवासना साऽपि कृष्णादेवी मोक्षं ययौ. सर्वपाशविनिर्मुक्ता जयरामस्वामिनो गोपालपुरे श्रीविठ्ठलेशदर्शनार्थं तीव्रं तपोऽकार्षुः. तेन तपसा संतुष्टो विठ्ठलेशः स्वयमाविर्भूय 'वरं ब्रूहि' इत्युवाच. जयरामस्वामिनश्च श्रीविठ्ठलेशं साक्षात्कृत्य कृतकृत्या अनुग्रहं ययाचुः. विठ्ठलेशस्तु तान् 'कृष्णापाअपाउर्णे'इत्याख्यानां साधूनां समीपे गन्तुमादिदेश.

जयरामस्वामिनोऽपि विठ्ठलेशाज्ञामनुसृत्य तेभ्यः साधुवरेभ्योऽनुग्रहं गृहीत्वा धन्याः सन्तः स्वगुरून्विज्ञापयामासुः. गुरुचरणाः ! 'सर्वदेहद्वयेव मम चित्तवृत्तिः कथं तिष्ठेत्' इति. जयरामस्वामिनामिदं वचनं निशम्य कृष्णापासाधुवरा अवोचन्—तात ! जयराम ! तदर्थं सततं सज्जनसंगतिरपेक्ष्यते. वयं त्वचिरादेव स्वर्गं गन्तारः. तत्त्वं शीघ्रमेव कृष्णातीरमागमिष्यतां लोकोत्तरवैराग्यशालिनां श्रीरामदासस्वामिनां सन्निधौ वस. तेन त्वदभिलषितं परिपूर्णं भविष्यतीति.

जयरामस्वामिनस्तद्वचनमाकर्ण्य संतुष्टाः कतिपयदिनानि तत्रैवोषित्वा दिवंगतेषु तेषु साधुवरेषु श्रीसमर्थानन्विष्यन्तोऽचिरादेव माहुलीक्षेत्रमागत्य श्रीसमर्थानां परमपवित्रे चरणारविन्दे नेमुः. श्रीसमर्थाअपि परमप्रेम्णा तान् सादरं स्वसंनिधौ न्यधुः. ततश्च वडगांवग्रामे ते जयरामस्वामिनः श्रीसमर्थानामाज्ञया विरचितमठाः स्वशिष्यसम्प्रदायं वर्धयन्तः श्रीसमर्थानां सनातनधर्मोद्धाररूपे कर्मणि साहाय्यं चक्रुः. समये समये च श्रीसमर्थानां दर्शनार्थं परळीग्राममपि प्रत्यागच्छन्.

एकदा श्रीजयरामस्वामिनो नदीं स्नातुं प्रस्थिता मार्गे करुणार्द्रं शोकध्वनिमश्रृण्वन्. करुणाक्रान्तमनसो झटिति तत्कारणं परिशोधयन्तस्ते कयोरपि वृद्धयोर्मातापित्रोः कश्चित्तरुण एकाकी पुत्रो मृतस्तस्य वृद्धौ मातापितरौ तदर्थं शोचत इत्यजानन्. नवनीतकोमलान्तकरणाः सहसा तद्गृहं गत्वा जयरामस्वामिनः पुत्रशोकविव्हलौ भूमितले लुठ्यन्तौ तत्पितरौ जगदुः—न मृतो युवयोः पुत्रस्तत्किं वृथा शोचतम्! इति. उक्त्वा चेत्थं तस्य मृतस्य कलेवरं स्वहस्तेनास्पृशन्. स च मृतो मानवो जयरामस्वामिनां परमपवित्रेण हस्तकमलेन स्पृष्टमात्र एव सहसा रामनाम जपन् सुप्त इवोत्तस्थौ. वाचकाः? स्वपुत्रं पुनरपि जीवन्तमवलोक्य तयोः स्थविरयोः पित्रोः कियान् प्रमोदोऽजायत ? कियती वा जयरामस्वामिषु आदरबुद्धिरिति यूयमेव तर्कयत.

## ( श्रीरंगनाथस्वामिनः )

एतेषां जन्मभूमिर्निजामशाहीराज्यान्तर्गतो'नाझरे'विभागः.एतेषां पितुर्नाम गोपालपन्तो मातुर्नाम'बयाबाई'इत्यासीत्. एते च जन्मतः सुसंपन्ना अपि संसारसुखं विषवन्मन्वाना जीवत्स्वेव तातपादेषु बदरिकाश्रमं गत्वा तत्र तीव्रं तपः समाचरन्. तेन तपसा सन्तुष्टो नारायणः स्वात्मानं दर्शयामास. श्रीरंगनाथस्वामिनस्तु त्रैलोक्यनाथं नारायणं वीक्ष्य परं सन्तुष्टा अनुग्रहं वव्रिरे. स्मेरमुखो नारायणः—त्वयालौकिकज्ञानशाली पितैव त्वामनुग्रहिष्यति इत्युक्त्वा तिरोदधे.

तिरोहिते नारायणे श्रीरंगनाथस्वामिनः स्वतपश्चर्यां समाप्य स्वगृहं प्रत्यागताः परमभगवद्भक्तात् स्वजनकादनुग्रहं गृहीत्वा निःसंदिग्धचेतसः कानिचिद्दिनानि स्वगृहे एवातिष्ठन्. ततः क्रमेणानेकजनमुख

संचरन्तीं श्रीसमर्थानां पुण्यां कीर्तिं निशम्य तद्दर्शनार्थं निष्क्रान्ताः. मार्गे च निगडीग्रामे तेषां वाहनमश्वः पंके न्यमज्जत्. तं च पंकनिमग्नं वीक्ष्य 'अश्वो मेऽत्रैव स्थातुमिच्छति' इति मन्यमानास्तत्रैव मठं निर्माय पुनश्च श्रीसमर्थानां दर्शनार्थमागच्छन्. श्रीसमर्था अपि तानवलोक्य समतुष्यन्. वाचकाः ? श्रीसमर्थाः— रंगनाथजयरामस्वामिनौ प्रति 'चिरंजीव' शब्देन समाह्वयन्.

एकदा श्रीरंगनाथस्वामिनो भागानगरमागत्य जयरामस्वामिनो वीक्ष्य मासद्वयपर्यन्तं तत्रैवावसन्. श्रीरंगनाथस्वामिनामयं दैनिकः क्रमः यत्प्रतिदिनं हरिकीर्तनं कर्तव्यमेवेति. तदा तेषां तदद्वितीयभक्तिरसपरिपूर्णं हरिकीर्तनं निशम्य समुत्पन्नश्रद्धा काचन विधवा तान् स्वगृहे भोजनार्थमाह्वयितुमियेष. परन्तु सा दारिद्र्यव्याकुलाऽसीत्. रंगनाथस्वामिनस्तु शिष्यपरिवारमण्डिता येनकेनापि स्वगृहे भोक्तुमाहूताः सशिष्यमेवागच्छन्. सा तु श्रद्धावत्यपि वृद्धा विधवा तावतः शिष्यसमुदायस्य भोजनेऽसमर्थैव. तदेतद्विचार्य प्रतिदिनं दुःखाकुला कथमपि कालं यापयामास.

अथैकदा जातनिश्चया सा विधवा हरिकीर्तने समाप्तेऽपि न गृहं जगाम किंतु तत्रैवातिष्ठत्. श्रीरंगनाथस्वामिनस्तु तस्या मनोगतमाशयं विदित्वा संजातकरुणा 'मातः ? श्वो भोजनार्थमहमेकाकी समागमिष्यामि' इत्यवोचन्. तेन वाक्यामृतेन संतुष्टा सा विधवा गृहं जगाम. द्वितीये दिने च यथाशक्ति संपादितमन्नं पक्त्वा तदागमनं प्रतिपालयन्ती तस्थौ.

अथ मध्याह्नकाले श्रीरंगनाथस्वामिनस्तस्या गृहं प्राप्ताः 'कथमधैकाकिना मया भोक्तव्यं' इति विचार्य श्रीसमर्थास्तथाऽन्यानपि स्व-

सदृशभगवद्भक्तानाह्वयन्. तेऽपि तस्मिन्नेव क्षणे समुपस्थिताः. वृद्धा विधवा च त्रीणि पात्राणि पंचातिथीनवलोक्य दुःखिता तूष्णीमस्थात्. तदाशयं विजानन्तो रंगनाथस्वामिनः स्वगृहइव स्वपात्रादपराणि त्रीणि पात्राणि निष्कास्यान्येषां साधूनां पुरतः स्थापयामासुः. तेषु नानाविधमन्नं पर्याप्तं श्रीसमर्थैः समं भुक्त्वा तां चोपदेशेनानुगृह्य स्वावासं प्रत्यागच्छन्.

## ( श्रीकेशवस्वामिनः )

तदानीमेव भागानगरे केशवस्वामिनो नाम महान्तो भगवद्भक्ता आसन्. ते च श्रीसमर्थानां यशःस्तोममाकर्ण्य सन्तुष्टास्तद्दर्शनार्थमेकं भक्तिरसमयं पद्यकाव्यं पत्रे लिखित्वा केनचिच्छिष्येण साकं श्रीसमर्थानामन्तिकं प्रेषयामासुः. स च शिष्यः क्रमेण नानादेशानतिक्रम्य परळीदुर्गं प्राप्य श्रीसमर्थचरणान् ववन्दे. अर्पयामास तत्काव्यं समं कुशलपत्रेण. श्रीसमर्थाश्च तत्पत्रं गृहीत्वाऽनुवाच्य च सुखिनः केशवस्वामिनोऽस्तुवन्. तं च शिष्यं स्नानासनभोजनादिनाऽतोषयन्.

अथ स्वगृहगमनायाज्ञां याचन्तं तं शिष्यं श्रीसमर्था अपृच्छन्—कथं वा मार्गे जीवनयात्रा संपादिता? इति. स त्ववदत्—गुरुचरणैर्द्वौ ताम्रखण्डौ दत्तौ, तावेव मह्यं पर्याप्तौ इति. समर्थास्तस्येदं वचनं निशम्य सस्मितमुखाः ‘तस्मै नव ताम्रखण्डान्’ वितेरुः समं कुशलपत्रेण. तच्च गृहीत्वा निर्गतः स शिष्योऽतिदूरवर्तिनं स्वनिवासं गच्छन् मार्गे यथेच्छं व्ययमकरोत्. परन्तु श्रीसमर्थप्रदत्तास्ताम्रखण्डा अवशिष्टा एव.

अथैकदा श्रीसमर्थाः संचारार्थं तं प्रदेशं गताः केशवस्वामिनो वीक्ष्य सानन्दाः किंचित्कालपर्यन्तं तत्र भागानगरे कृतनिवासाः प्रत्याजग्मुः.

## ( श्रीआनन्दमूर्तिस्वामिनः )

एकदा श्रीसमर्था भक्तजनमुखेन ब्रह्मक्षेत्रे परमभगवद्भक्ता आनन्दमूर्तिनामानः स्वामिनो निवसन्तीति श्रुत्वा करवीरक्षेत्रान्निर्गत्य तद्दर्शनार्थं ब्रह्मक्षेत्रं ययुः. श्रीसमर्थान् समागतान्निशम्य संध्योपासनपरा अपि श्रीयुतानन्दमूर्तिस्वामिनः सहसैव बहिः समागत्य श्रीसमर्थचरणकमले परमानन्देन ववन्दिरे. ततो महतादरेण गृहाभ्यन्तरं नीताः श्रीसमर्था आनन्दमूर्तिस्वामिनां निष्कपटया निष्कामया भक्त्या संतुष्टमुपासनादैवतं रामपंचकमानन्देन प्रचलदपश्यन्. तद्वीक्ष्य परं विस्मिताः श्रीरामदासस्वामिन आनन्दमूर्तिस्वामिनो जगदुः—तात ? आनन्दमूर्ते ? त्वया भक्तेः परमोऽवधिः कृतः. यया भक्त्या श्रीरामचन्द्रः सानन्दं नृत्यति इति. तत्रापि कानिचिद्दिनानि स्थित्वा स्वनिवासं प्रत्याजग्मुः श्रीसमर्थाः.

प्रियवाचकाः ? एवमन्येऽपि तदानीं बहवः साधवो भक्तप्रवराश्च प्रादुर्बभूवुः. यथा च पर्जन्यमागमिष्यन्तमुत्प्रेक्ष्य प्रथममेव पिपीलिकाः स्वाण्डानि सुरक्षिते स्थाने स्थापयन्ति, तथैवावतरिष्यतो भगवतः साहाय्यविधित्सयेव भक्तप्रवरा अपि सर्वत्र समुद्भवन्तीति मन्ये. यदा च भारतवासिनां यवनाक्रमणदुःखमसह्यं बभूव तदा सर्वस्मिन् भारतेऽनेके साधवः समजायन्त, न केवलं महाराष्ट्रे. तद्यथा–पंजाबदेशे–नानकः, आर्यावर्ते–कबीरतुलसीदाससूरदासवल्लभाचार्यप्रभृतयः, महाराष्ट्रे चासंख्याः साधवः.

वाचकाः ! महाराष्ट्रीयेषु तदानींतनेषु साधुषु 'तुकाराम'नामानः साधुवराः परं श्रेष्ठा आसन्. इमे अपि शिवनृपतेरुपदेशादिना साहाय्यं विधाय स्वराज्यस्थापनार्थं प्रोत्साहयन्ति स्म. ते च तुकारामाः श्रीसमर्थानां कीर्तिं निशम्य तद्दर्शनार्थं देहूग्रामात्परळीग्रामं समागच्छन्. तानागच्छतः श्रुत्वा समर्था अपि विदिततद्विभवाः सशिष्यं प्रत्युज्जग्मुः. सत्कृत्य च तान् गृहीत्वा स्वावासं प्रत्यागमन्.

अथ परस्परं सानन्दं मिलितौ तौ साधुश्रेष्ठौ हरिकीर्तनादिभिः सर्वान् जनान् परमतोषयताम्. तत एकदा रहसि तुकारामान् प्रति श्रीसमर्थाः—'कथं युष्माकं वैराग्यसंपत्तिः संवृत्ता 'इत्यपृच्छन्. तेऽपि परमभागवताः सरलहृदयाः—अहमस्मि जात्या वैश्यः. सोऽहं जात्यनुरूपं वणिग्व्यवहारं कुर्वन् सुखेन संसारयात्रामकार्षम्. अथैकदा सुदैवतो वा दुर्दैवतो वा महद्वर्षणमपतत्. सर्वे च प्राणिनोऽन्नमलभमानाः सहसा प्राणान्विससर्जुः. तदानीं च मम वृषभास्तथा सर्वे वंशजा मानवाः पंचत्वमयुः. मदीयः पुत्रश्च क्षुधातुरो यमालयं प्रविवेश. तद्वीक्ष्य 'सर्वमिदं जगदनित्यं क्षणभंगुरं च' इति मन्वानोऽहं कुलपरंपराप्राप्तां श्रीविठ्ठलेशभक्तिमधिकामकार्षम्. तत्रापि मम द्वितीया भार्या नातिसम्यगवर्तत. तयाऽपि स्ववर्तनेन मदीयं वैराग्यं दृढीकृतं. साम्प्रतं च कृत्स्नमपि दिनं हरिकीर्तनेन यापयन् युष्मादृशां सज्जनानां संगत्याऽत्मानं मोदयन् जीवनयात्रां करोमीति.

* श्रीसमर्थाश्चेमं वृत्तान्तं श्रुत्वा नितान्तं सन्तुष्टाः स्वचरितमपि निवेद्य कतिपयदिवसानंतरं तुकारामान् स्वावासं प्रेषयामासुः.

प्रियवाचकाः ? एवं तदानींतनैः साधुवरैः सह मिलित्वा श्रीसमर्थाः 'साम्प्रतं धर्मोद्धारः कथं कर्तव्य' इति विचारयामासुः.

तदर्थमेव नानादिग्भ्यः समागताः साधुवराः परळीग्रामं. तदानीं च धर्मस्थितिः कीदृश्यासीदिति श्रीसमर्थाः पृथिवीपर्यटनकाले समपश्यन्नेव.

एवं स्थिते तैः सर्वैः साधुवरैः समं विचार्य श्रीसमर्थाः—स्थाने स्थाने देवालयान् मठांश्च स्थापयित्वा तत्र तत्र प्रदेशे शिष्यसंप्रदायो वर्धनीयः. सर्वेभ्यः शिष्येभ्यः स्वस्वोपास्यदेवताया उपासना कथनीया. यदा च तत्र ते निष्णाता भवेयुस्तदा सर्वस्मिन्नार्यावर्ते तान् संप्रेष्य सर्वत्रेश्वरभक्तिभावो वर्धनीयः. ईश्वरभक्तौ च सर्वत्र जायमानायां स चराचरपालकः सीतानाथोऽवश्यं स्वभक्तान्विपद्भ्यो मोक्ष्यतीत्यत्र न संशय इति निरणयन्. ततश्च सर्वानपि विसृज्य प्रथमतः स्वोपास्यदेवतायाः श्रीरामचन्द्रस्य देवालयं विरचयितुं पुस्थानमन्वैषयन्.





# (७) मठस्थापना भक्तियोगप्रसारश्च

श्रीसमर्थाः सर्वत्र सह्याचलेऽप्रतिहतसंचाराः परमतपस्विनः सर्वत्रारण्ये स्वयं संचार्य श्रीरघुपतिदेवालयस्थापनार्हं स्थलमशोधयन्. एकदा क्रमेण पर्यटन्तः श्रीसमर्थाः समन्तादतिनिबिडवृक्षततिभिः परिवेष्टितं, सुगन्धिपुष्पगुच्छमण्डितवनलताच्छादितं, संततनिपतद्गिरिनिर्झरजलतुषारमौक्तिकमालाविभूषितं, ग्रीष्मरविकिरणैरपि दुष्प्रवेश्यं, अतिभयंकरक्रूरव्याघ्रादिश्वापदनिवासं, चाफळनामकग्रामटिकाक्रान्तं स्थलं प्रेक्ष्य संतुष्टाः'अत्रैव मठं निर्माय रघुपतिः स्थापनीयः' इति निरचिन्वन्. ततश्चाचिरादेव तत्र श्रीसमर्थानां शिष्यसमुदायोऽगणितद्रव्यशाली स्वगुर्वाज्ञानुरूपं देवालयं व्यरचयत्.

अथ सिद्धकल्पे देवालये श्रीरघुपतेः प्रतिमाविधानार्थं कुशलेषु शिल्पिषु समाज्ञप्तेषु सत्सु ते वर्षमात्रमवधिमकथयन्. तादृशं कालावधिमसहमानाः श्रीसमर्थास्तद्वचः श्रुत्वा खिन्नाः केवलं 'श्रीच्छा'इत्येवाब्रुवन्.

अथैकदा श्रीसमर्था रहिमतपुरनाम्नि ग्रामे दक्षिणावाहिन्यां कृष्णायां स्नातुमगमन्. तत्र च गत्वा यथाविधि विहितस्नाना ध्यानार्थमुपविष्टा यदा च ते मारुतिमध्यायंस्तदा तेषां मनसि श्रीमारुतिर्नागतः प्रत्युत श्रीरामचन्द्र एव प्रादुर्बभूव. तेन विस्मिताः श्रीसमर्थाः श्रीरामचन्द्रमपृच्छन्–'कथमिदं'इति. तदा च श्रीरामचन्द्रः स्वयमाविर्भूयावोचत्–'मम प्राचीना मूर्तिरस्मिन्ह्रदे पतिताऽस्ते. तां गृहीत्वा चाफळदेवालये स्थापय' इति.

श्रीसमर्थाश्चेमां सीतानाथस्याज्ञां शिरसा स्वीकृत्य ह्रदे निमज्य तां मूर्तिं निष्कासयामासुः. तां च मूर्तिं निरतिशयलावण्यशालिनी-मनवद्यां वीक्ष्य सन्तुष्टाः श्रीसमर्था महताऽनन्देन तां मूर्तिं गृहीत्वा चाफळमठं प्रतस्थिरे. तदेतद्वृत्तं पशुपालैर्ग्रामनिवासिभ्यो निवेदितं. ते च सर्वे तद्वृत्तं निशम्य दुःखाकुला मिलित्वा धावन्तः श्रीसमर्थान् मार्गएव न्यरुन्धन्. 'अस्मद्ग्राममर्यादास्थोऽयं ह्रदस्तदस्माकं रघुपति-मूर्तिं गृहीत्वा क्व पलायसे' इति दूषयामासुश्च. श्रीसमर्थाश्च तेषा-मिदं घोरं वचनमाकर्ण्यापि प्रसन्ना अविकृतचेतसस्तत्रैव तां मूर्तिं न्यधुः. जगदुश्च—यदि युष्माकमियं मूर्तिस्तदा गृह्णीत यूयं! नास्त्यपेक्षा ममेति.

अथ च सा निहिता मूर्तिस्तत्रैव निश्चलीभूता. तां च सर्वेऽपि ग्रामवासिनो जना मिलितास्तस्मात्स्थानादुद्धर्तुमैच्छन् परन्तु न यशोऽलभन्त. सा च मूर्तिः स्वल्पमपि स्वस्थानान्न प्रचचाल. ते चैतदपूर्वं मन्यमानाः संजातविस्मयाः सर्वेऽपि रहिमतपुरवासिनो जनाः समर्थानामलौकिके तेजसि संजातश्रद्धाः साष्टांगं प्रणिपेतुः. विज्ञापयामासुश्च—सद्गुरो? अज्ञानादस्माभिर्महदपराद्धम्. तदस्मासु सम्यगनुकंप्य नीयतामियं मूर्तिरिति.

समर्थास्तु विहसन्तः 'तथास्तु' इत्युक्त्वा स्वशिष्यं 'भानाजी-गोसावी' नामकं मूर्तिमानेतुमादिदिशुः. सोऽपि लीलयैव भगवत्या गणपतेश्च मूर्तिभ्यां सह तां रघुपतेर्मूर्तिं गृहीत्वा समाजगाम. अथ ता एता अतिसुस्वरूपा देवानां मूर्तीरवलोक्य संतुष्टाः श्रीसमर्था मठनिर्माणार्थं स्थलमन्वैषयन्. ते च चाफळमागत्य तत्रस्थान् जनान् स्थानार्थमपृच्छन्. ते तु स्मशानं स्थानत्वेनादर्शयन्.

श्रीसमर्थाश्च 'श्रीरघुपतिर्हि मंगलानामपि मंगलं' इति मन्यमानास्तत्रैव स्थानशुद्धिं विधाय महान्तं मठं व्यरचयन्. ततश्च महतोत्सवेन दशरथनन्दनं देवालयेऽस्थापयन्. भगवतीं गजाननं चात्रैव. एवं चाफळग्रामे देवस्थापनां मठं च विरचय्य प्रतिवर्षं ते रामनवमीमहोत्सवं चक्रुः. वाचकमहाभागाः ? एवंक्रमेणावर्धत प्रतिदिनं श्रीसमर्थानां यशःस्तोमः. नानादिग्भ्यो विविधसंसारदुःखदग्धा जनाश्चाफळमठमागत्य श्रीरामदेवदर्शनं विधाय स्वजन्मनः साफल्यं लेभिरे.

अथैवं श्रीरघुपतेः स्थानं विरचय्य साम्प्रतं शिष्यसंप्रदायं विवर्धयिषवस्ते समर्था रामेश्वरयात्रामकार्षुः. मार्गे च ये ये शरणमागतास्ताननुगृह्य रघुनाथसेवां च कथयित्वा शिष्यसंप्रदायमवर्धयन्. श्रीसमर्थाश्च गोदावरीतीरे 'अडपळ' ग्रामवासिनं अप्पय्यादीक्षिताख्यं श्रीशिवावतारं साधुवरं दृष्ट्वाऽग्रे तंजावरनगरं जग्मुः. श्रुतश्रीसमर्थकीर्तिस्तोमो गोब्राह्मणप्रतिपालकस्य शिवराजस्य बन्धुर्व्यंकोजिराजः समागच्छतः श्रीसमर्थान्निशम्य सानन्दो महताऽऽदरेण प्रत्युज्जगाम. अभिवंद्य च श्रीसमर्थचरणकमले धन्यंमन्यस्तान् स्वराजधान्यां वासार्थं विज्ञापयामास. श्रीसमर्था अपि तदीयां विज्ञप्तिमंगीकृत्य कानिचिद्दिनानि तत्रोषुः.

वाचकाः ? ये खलु सज्जना अस्मिन् जगति दृश्यन्ते ते च दुर्जनैः परिवृता एव. दुर्जनसंत्रासिता हि ते सज्जनतां गच्छन्ति न प्रकृत्या. यो हि सज्जनान् सृष्ट्वा पुनरपि दुर्जनानुत्पादयति जगदीश्वरस्तस्यायमेवाशयः—यत्—दुर्जनद्वारा सज्जनानां कीर्तिस्तोमः कृत्स्नेऽपि जगति प्रसरत्विति. यथाहि सामान्यतो जनाः कंटकिवृक्षं विना सहकारवृक्षस्य योग्यतां न जानन्ति, तथैव दुर्जनं

विना सज्जनस्यापि. अस्तु. ते च दुर्जना द्विविधाः. सुशिक्षिता अशिक्षिताश्च. तत्राशिक्षिताः केवलं स्वव्यवहारविरुद्धं व्यवहरतः सज्जनान्वीक्ष्य निन्दन्ति. परन्तु सुशिक्षिता दुर्जनाः स्वव्यवहारमोहेन पाण्डित्यगर्वेण च समाकृष्टाः परं भयंकरा भवन्ति, सज्जनविदुषोरयं महान् भेदः यत्—सज्जनाः प्रकृत्यैव सच्छीला वांच्छन्तोऽपि कुकर्म कर्तुमसमर्थाः सर्वदा परकल्याणपरा एव भवन्ति. विद्वांसस्तु यदि कल्याणं कर्तुं वांच्छन्ति चेत्कुर्वन्ति परन्तु यद्यकल्याणं कर्तुं वांच्छन्ति चेत्तत्तथा कुर्वन्ति यथाऽशिक्षितो दुर्जनः कर्तुं न पारयेत्. अस्तु. ईदृश एव प्रसंगः श्रीसमर्थानामुपरि समागतः. स चेत्थम्.

श्रीसमर्थेषु व्यंकोजिराजस्य विज्ञप्तिं स्वीकृत्य तंजावरनगरमधिवसत्सु सत्सु कश्चिदांध्रब्राह्मणः षट्शास्त्रसंपन्नो राजगुरुः श्रीसमर्थानां समीपमागत्याब्रवीत्—भवद्भिः संन्यासदीक्षा गृहीता. तत्स्त्रीणां सांनिध्यमनुचितमिति. तस्येदं भाषणं स्ववैभवासूयामूलकं शिष्यप्रवरवेणुअक्कादिस्त्रीशिष्यविषयकमिति जानन्तोऽपि श्रीसमर्था न किंचिदूचुः प्रत्युत लिंगाच्छुक्रं बहिर्निःसार्य पुनरपि तेनैव द्वारेण तदाचकर्षुः. स च शास्त्रपाठी ब्राह्मणः श्रीसमर्थानामिदमलौकिकं योगसामर्थ्यं वीक्ष्य विस्मितस्तच्चरणयोर्मिलिन्दायमानो बभूव. अवदच्च—गुरुचरणाः! यत्खल्वहं छलकबुध्याऽगदम् तत्सर्वं क्षमध्वमिति.

श्रीसमर्थाश्च दयासागरास्तं शास्त्रिणमनुतापसंतप्तं वीक्ष्य कृपयाऽनुजगृहुः. ततः श्रीराजा व्यंकोजिरपि श्रीसमर्थानामनुग्रहं गृहीत्वा व्यजिज्ञपत्—गुरुचरणाः? नातःपरं भवद्भिर्यत्रकुत्रापि गन्तव्यं. अहं चात्रैव मठस्थापनां कृत्वा सर्वं साहाय्यं करिष्यामि इति. श्रीसमर्थाश्च

तस्येदं भाषणं निशम्य सन्तुष्टाः ऊचुः—अस्माकमेकत्र निवासोऽशक्यः परन्तु मठं विधाय तत्र रघुपतिं स्थापयित्वा तत्सेवार्थं 'भिकाजीगोसावी, मौनिबुवा' इति शिष्यद्वयं स्थापयिष्यामीति. राजा व्यंकोजिरपि श्रीसमर्थानामाज्ञेत्युक्त्वा तूष्णीं तस्थौ. ततश्च श्रीसमर्थाज्ञानुरूपं महान्तं मठं कुशलैः शिल्पिभिः श्रीव्यंकोजिराजोऽप्यचिरादेवाकारयत्. श्रीसमर्थाश्च तत्र महता महेन यथाविधि रघुपतिप्रतिमां स्थापयित्वोपरि निर्दिष्टं शिष्यद्वयं मठव्यवस्थायां श्रीरघुपतिसेवायां च नियुज्य स्वयं रामेश्वरमगच्छन्. ततश्च मंचाळक्षेत्रे राघवेन्द्रस्वामिनं, उडपीक्षेत्रस्थं सुब्रम्हण्यक्षेत्रस्थं चाचार्यगणं साक्षात्कृत्य सानन्दाः पुनरपि स्वस्थानमागच्छन्.

वाचकाः ? श्रीसमर्थानां सनातनधर्मोद्धारोऽवश्यं कर्तव्य आसीत्. ततश्च लोकस्थित्यवलोकनार्थं या यास्तीर्थयात्रास्तैः कृतास्तासु सर्वासु तैरिदमवधृतं. यत्—स्थाने स्थाने मठस्थापनां कृत्वा श्रीरघुपत्युपासनाद्वारा सर्वेषामैकमत्यं करणीयम्. ऋते चैकमत्याद्यत्किंचिदपि कार्यं दुष्करमेवेति सार्वजनीनम्. तस्मात् प्रथमतः स्थाने स्थाने मठाः स्थापनीया इति विचार्य पुनरपि ते समर्था मातृगयायात्रार्थमगच्छन्. ततश्च नानातीर्थानि पर्यटन्तः सारंगपुरस्य समीपे 'इन्दूर'नामकं ग्राममाजग्मुः.

तत्र च कण्ठमात्रे जले स्थित्वा तपस्यतो ब्राह्मणान् वीक्ष्य साश्चर्यास्ते तानेवैवंविधोग्रतपश्चर्याकारणमपृच्छन्. तथा पृष्टास्ते ब्राह्मणा जगदुः—अस्त्यस्य ग्रामस्याधिपतिर्यवनः. स चास्मान् सर्वान ग्रामस्थानेकीकृत्यावदत्—अस्मिन् वर्षे पर्जन्यो न पतितः. तेन च सर्वाः प्रजा दुःखायन्ते. तस्माद्यद्यासायं पर्जन्यो नागमिष्यति तदाऽहं

सर्वान् युष्मान् यवनान् करिष्यामीति. तेन भीता वयं पर्जन्यसूक्ते नेश्वरं स्तुमः. यदि चास्मासु रुष्टः परमात्मा पर्जन्यं न पातयेत्तद वयं प्राणांस्त्यक्ष्यामः इति.

इदं च साश्रुनयनानां शीतपीडाकम्पितशरीराणां ब्राह्मणान दीनं वचनं निशम्य दुःखिताः श्रीसमर्थाः सहसैव तान् 'यूयं जला द्बहिरागच्छत. पर्जन्यश्च पतिष्यति' इति अगादिषुः. श्रीसमर्थमुखा रविंदविलसत्तेजोविशेषदर्शनजातविस्रंभेषु ब्राह्मणेषु तडागान्निर्गते ष्वेव पर्जन्यः पतितुमारभत. सर्वे च ते ब्राम्हणाः श्रीसमर्थानामीद शमलौकिकं सामर्थ्यं वीक्ष्य परं विस्मिताः साष्टांगं प्रणिपेतुः. यव नपतिश्च समागतं पर्जन्यं वीक्ष्य ब्राह्मणान् सत्कर्तुं तत्स्थलमागत 'नास्माकमयं प्रभावः केवलमेतेषां श्रीसमर्थानां कृपया वयमद्य प्राण संकटान्मुक्ता'इति तैर्निवेदितः श्रीसमर्थचरणारविन्दयोः पतितस्त :स्थले श्रीरामचन्द्रस्य स्थापनार्थं विज्ञापयामास. उदारा भक्तवत्सलाः श्रीसमर्थचरणास्तस्य यवनस्य तथा ब्राह्मणानां च विज्ञप्तिं निशम्य सन्तुष्टास्तत्र महान्तं मठं विरचय्य तत्र कोदण्डरामचन्द्रमूर्ति मस्थापयन्.

एवमेवैकदा श्रीसमर्थाः केशवस्वामिभिः समं मिरजग्राममगच्छन्. तत्र च पूर्वमेव समागता जयरामस्वामिनः कस्यचिद्भक्तस्य विज्ञप्त्या रात्रौ हरिकीर्तनं चक्रुः. महता प्रेम्णा हरिकीर्तने प्रचलिते तस्य ग्रामस्याधिपो दिलेलखाननामा यवनो रात्रौ नगररक्षणार्थं पर्यटंस्त त्रैव समाजगाम. अतिष्ठच्च किंचित्कालं हरिकीर्तनं श्रोतुं. जयराम स्वामिनश्च तस्मिन्नेव समये भक्तिनिरूपणप्रसंगेन 'साधवो येन मार्गेण गच्छन्ति तेनैव मार्गेण कश्चिद्गच्छेच्चेत्सोऽवश्यमेवेश्वरं लभेत,

इत्यवदन्. स तु यवनस्तद्वाक्यं मनसि निधाय द्वितीयदिने जयरामस्वामिनामानयनार्थं शिबिकां प्रेषयामास. जयरामस्वामिनोऽपि तत्परकीयाह्वानं स्वीकृत्य जग्मुः. यवनाधिपस्तु सादरं पुरस्तादागत्य सत्कृत्य च स्वामिनः सिंहासनमध्यारोपयामास. व्यजिज्ञपच्च–स्वामिचरणाः ? रात्रौ हरिकीर्तनसमये भवद्भिः–'साधूनां मार्गेण गच्छतः श्रीरामप्राप्तिर्भवती'ति प्रतिपादितं. अहं चाद्यापि साधूनां मार्गेणैव गच्छामि गन्तुमिच्छामि च. तद्भवद्भिर्मह्यं रामो वा दर्शनीयोऽन्यथा महंमदीयधर्मो वा स्वीकर्तव्य इति.

तस्येदं क्रूरं वचनं निशम्य श्रीजयरामस्वामिनो दुःखाकुला निरुत्तराः किंकर्तव्यतामूढा अजायन्त. ततो धैर्यमवलंब्य 'अस्मद्गुरवः श्रीरामदासस्वामिनोऽत्रैव तिष्ठन्ति तानाहूय तेषां सम्मतिं गृहीत्वा सर्वं करिष्याम' इति जगदुः. स च यवनः परमप्रीत्या तथेत्युवाच.

अथ जयरामस्वामिनोऽपि स्वशिष्यं गोपालं श्रीसमर्थानां निकटे प्रेषयामासुः. गोपालस्वामिनस्तु तत्र गत्वा सर्वं वृत्तं श्रीसमर्थेभ्यो निवेद्य साक्रोशं रुरुदुः. श्रीसमर्थाश्च–यथा हरिकथायां निरूपितं तथाऽधुना वर्तनीयं. साधुभिः स्वसामर्थ्यमवलोक्यैव वाक्यान्युच्चारणीयानि, नेतरजनवद्यथेच्छं. तस्माद्येन यदुक्तं तेन तन्निर्वाह्यमिति गोपालस्वामिनं निर्भर्त्सयन्तोऽपि सत्वरं तां यवनसभां समाययुः. अवदंश्च जयरामस्वामिनः–जयराम ? का वार्ता ! अयं यवननायको रामचन्द्रं द्रष्टुमिच्छति ! साधु ! वयं तं सीतानाथं दर्शयिष्याम इति. उक्त्वा चेत्थं–ते प्राकारवलयं परितः शनैः शनैरितस्ततः पर्यटन्.

अथ तस्मिन्नेव क्षणे तस्मिन् प्राकारे यानि गोलीयंत्रमुखनिष्का-

सनार्थं स्थापितानि छिद्राण्यासंस्तेष्वेकतरस्मादतिसूक्ष्माच्छिद्राच्छ्री-रामदासस्वामिनः सत्वरं बहिर्निर्गत्याधस्तनं प्राकारमगच्छन्. तत्र स्थित्वा सस्मितवदनास्ते जयरामस्वामिनः प्रति—'जयराम ? त्वमप्यत्रागच्छे'त्यवदन्. अनवसित एव श्रीसमर्थाज्ञावाक्ये जयरामस्वामिनस्तेनैव छिद्रमार्गेण निर्गताः श्रीसमर्थानां सन्निधौ समागमन्. तत इदं तयोश्चरित्रमवलोक्य परं विस्मितं तं यवननायकं श्रीसमर्थाः सहासमवदन्—यवनपते ? एष साधूनां मार्गः. अनेन यदि त्वमत्रागमिष्यसि तदा तत्क्षण एव त्वां परमात्मानं रामचन्द्रं दर्शयिष्यामीति. तदेतत्समर्थानां वचनं निशम्य हतबुद्धिः स यवनमुख्यः पश्चात्तापदग्धः श्रीसमर्थचरणयोर्निपत्य क्षमामयाचत.

अथ प्रकृत्यैव दयालून् सज्जनवरान् श्रीसमर्थचरणान् स यवन आत्मानमनुग्रहीतुं विज्ञापयामास. तस्य तद्दीनं वचनं निशम्य कृपापराः स्वपरभेदासमर्थाः श्रीसमर्थास्तदीयां विज्ञप्तिमनुसृत्य मिरजग्रामे महान्तं मठं निर्माय तत्र वेणूबाईनाम्नीं प्रधानस्त्रीशिष्यां स्थापयित्वा 'अस्या नियोगमनुसृत्य यदि त्वं वर्तेथास्तदा कृतार्थो भविष्यसि'इति तं यवनाधिपमाज्ञाप्य स्वयं चाफळमठमागच्छन्.

एकदा श्रीसमर्थाः कल्याणस्वामिनमाहूयावोचन्—कल्याण ? त्वमितो निर्गत्य डोमगांवग्रामे नूतनं मठं स्थापयित्वा तत्रैव वसेति. तदिदं श्रवणदाहकं वचनं निशम्य मूर्ध्नि वज्रपातेन निहिता इव कल्याणस्वामिनः साश्रुमुखा धरणौ निपत्य—'को वा ममापराधः संवृत्तो येन क्रुद्धा गुरुमाता मां दूरं क्षिपति' इत्यादि विलापैः श्रीसमर्थान् विज्ञापयामासुरवियोगाय. परन्तु धीराः श्रीसमर्थास्तान् सान्त्वयित्वा 'कल्याण ? पुरा डोमगांवग्रामे मदीयं वस्त्रं यदा कंटक-

वृक्षलग्नमासीत्तदा त्वमेव तदमोचयः. तदानीमेव मन्मनसि संकल्पोऽभूत् यत्–अत्र मठं निर्माय तत्र त्वं स्थापनीय' इति.

अथ तेषामिमामाज्ञामंगीकृत्याऽनन्यगतिकास्ते कल्याणस्वामिनो डोमगांवग्रामे मठं निर्माय तत्रैव निवसन्तः समये समये चाफळमठमागत्य श्रीसमर्थचरणानद्राक्षुः.

प्रियवाचकाः ? एवंक्रमेण तत्तत्स्थाने मठान्विधाय रघुपतिसेवाधर्मेण नानाजातीयान् विभिन्नस्वभावान् जनान् श्रीसमर्था एकमनस्कांश्चक्रुः.

सज्जनाः पाठकाः ? न खलु शुद्धमनसां दैवतोपार्जनसंपादितान्तःकरणबलानां जनानां संहत्या किंचित्कार्यं भवति. नापि केवलं ज्ञानसंपादनव्यतीतायुष्कैरस्थिपंजरमात्रावशेषैर्नरविशेषैः. किंतु ये सम्यग् जानन्ति, ये च बुध्यारूढं कार्यं साक्षादिह जगति कर्तुं प्रभवन्ति तेभ्य एव नरशार्दूलेभ्यः किंचित्कार्यं जायते.

प्राय इदं सर्वत्रैव दृश्यते–यत्–बहवो हि कुशाग्रबुद्धयो जनाः यस्य कस्यापि दुःखस्य परिहाराय प्रयतमाना नानाविधानुपायांस्तर्कयन्ति किंतु स्वल्पा एव तैरनुष्ठीयन्ते. किमत्र कारणं ? नान्यत्कारणमृतेऽनुष्ठातॄणामशक्तेः. अशक्ता हि जनाः केवलं वाचैव प्रलपन्तो न किंचिच्छक्त्याऽनुतिष्ठन्ति. लोकोद्धारो नाम शक्तेः कार्यं. तदानींतनाश्च यवनराजाः सैन्यबलसम्पन्नाः सनातनधर्ममपीडयन्. तेषां च पीडानिवारणं विना धर्मस्वास्थ्यं लोकस्वास्थ्यं चाशक्यं, राजसाश्च ते यवना न कदापि तत्त्वोपदेशेन वा, प्रणिपातेन वा, आदरेण वा प्रकृतिस्था भविष्यन्तीत्याशास्पदमपि. असकृत्परवनितापहारतत्पराणां तेषां चेतसि कुतोनाम तत्त्वोपदेशस्य

वा, ज्ञानस्य वाऽवकाशः. यदा तु स्वसमबलैर्युद्धकुशलैस्ते निहता-स्तदैव ते तस्मादकार्याद्व्यरमन्.

श्रीसमर्थाश्चैतत्सर्वं विज्ञाय सनातनधर्मानुयायिनां शारीरबलवृ-द्ध्यर्थमपि प्रायतन्त.

किंच—'यादृशीं भावनां कुर्यात्सिद्धिर्भवति तादृशी' इति न्याय-मनुसृत्य तादृशीमेव देवतामुपासनार्थं ते व्यचिन्तयन्. यद्यपि जगतीतले बुद्धिबलमेव श्रेष्ठं तथापि तच्छरीरबलविहीनं परिहासाय भवति. रामचन्द्रादीनां तूपासना श्रेष्ठाऽन्तःकरणस्य शान्तिप्रदा चित्तस्थैर्यसंपादिका मोक्षोपयोगिनी च. परन्तु यत्र शारीरबलस्या-वश्यकत्वं, यत्र दुर्बलाः सबलैर्हन्यन्ते, तत्र तत्त्वज्ञानस्य वा चि-त्तस्थैर्यस्य वा तदुपदेशस्य वा कोऽवकाशः.

वाचकाः? सर्वासु देवतासु च बलप्रदायिनी देवता नाम मारुतिः. यतो ब्रह्मचर्यस्थैर्येऽवश्यं शारीरं बलं वर्धत इति सिद्धान्तः. तच्च मारुतेरुपासनायां प्रधानं. तस्मादपि हेतोः श्रीसमर्थाः स्थाने स्थाने मारुतिदेवालयानि व्यरचयन्.

प्राथमिकीं तपश्चर्यामारभ्य श्रीसमर्था यत्र यत्र स्थाने तीर्थयात्रा-र्थं वाऽन्यकार्यार्थं वाऽयासिषुस्तत्र तत्र सर्वत्रैव मारुतिप्रतिमा अस्थापयन्. परन्तु तैः स्थापितानामेकादशमूर्तीनां प्रसिद्धानि स्थानानि प्रदर्शयामि.—

शहापुरे, मसुरग्रामे महोत्सवार्थं, चाफळमठे, उंब्रजग्रामे,—मांजेग्रामे, शिराळेग्रामे, मनपाडळेग्रामे, पारग्रामे, शिंगणवाडीग्रामे, बाहेग्रामे, चाफळमठे रघुपतिदेवालयस्य पश्चाद्भागे.

एवं स्थानेस्थाने श्रीमारुतिदेवालयानि विरचय्य महाराष्ट्रीयतरुणानां शारीरसामर्थ्यमवर्धयन्.

एकदा च श्रीसमर्थानां दर्शनार्थं श्रीशिवराज आगच्छत्. स तु वृत्तकुशलप्रश्नो जिगमिषुः श्रीसमर्थानित्थं विज्ञापयामास—गुरुचरणाः! सन्ति राज्यकार्याणि बहूनि. तेषां सफलीकरणाय प्रयततेऽयं दासः. परन्तु मनीषा तु युष्मत्सांनिध्यमपेक्षते. प्रतिदिनं श्रीगुरुचरणानां दर्शनं कार्यं. युष्मन्मुखकमलनिर्गतमुपदेशामृतं पेयमिति सदैव वांछामि. परन्तु राजकार्यबाहुल्यान्न तथा कर्तुमहं पारयामि. तदहं गुरुचरणानेव प्रार्थयामि सान्निध्यदानार्थं. तद्यदि कृपालुतया गुरुचरणैः प्रदीयेत तदा विहितनित्यगुरुदर्शनो धन्यो भविष्यामि इति. तस्य चेमां प्रार्थनां निशम्य परळीदुर्गे स्थातुं श्रीसमर्था मनोऽकुर्वन्. शिवनृपतिरपि तेनात्मानं धन्यं भावयन् सर्वमेव दुर्गं सन्नाह्य श्रीसमर्थपादेभ्यः समर्पयत्. श्रीसमर्था अपि तत्रैव कृतनिवासा उपासनार्थं तत्र नूतनं मारुतिमस्थापयन्.

वाचकाः! एवंक्रमेण श्रीसमर्थाः श्रीरघुपतिनियोगमनुसृत्य सनातनधर्मोद्धारार्थं रात्रिंदिवं प्रायतन्त. तैस्तैः प्रसिद्धैः साधुवरैः सह ते नानाविधानुपायान् व्यचिन्तयन्.

श्रीसमर्थाश्च श्रीरघुपतेस्तथा श्रीमारुतेश्च देवालयान्विविधस्थानेषु स्थापयित्वा लोकानुपदेशेनोत्तेजयन्तो मनस्यकुर्वन्—देवालयाश्च स्थापिताः, साम्प्रतं शिष्यसंप्रदायो वर्धनीयः, शिष्यसमूहैर्विना विस्तृत आर्यावर्ते केवलमेकाकिना मया लोकजागृतिः कर्तुमशक्या. शिष्याश्च तत्रैवागच्छन्ति यत्र चोपासनालब्धः सामर्थ्यविशेषो दृश्यते. यद्यपि उपासनासंप्राप्ताः सिद्धयो नाम नान्तिमं साध्यं

प्रत्युत मोक्षमार्गे ता विघ्नान् जनयन्ति तथापि लोकसंग्रहकरणे ताः कारणमेव. लोककल्याणेच्छुना साधुनोपासनाप्राप्तासु सिद्धिषु मोहमकृत्वा तासामुपयोगो लोककल्याणविधाने करणीयः. एवंस्थिते न ता आत्मानं दूषयन्ति. अनायासेन लोककल्याणमपि सिध्यति.

किंच—सामान्यतो मूढा जना यथा प्रत्यक्षे विश्वसन्ति न तथाऽप्रत्यक्षे. यथा दण्डधारिणं राजपुरुषं वीक्ष्य चौरो बिभेति नैवं ब्राह्मणदत्ताच्छापात्. तस्मान्मूर्खाणामैक्यं तच्छन्दानुरोधवर्तनेनैव संपादनीयमिति. एतत्सर्वं विचार्य शिष्यसंघसम्पत्त्यर्थं नानाविधांश्चमत्कारानुपासनासामर्थ्येन प्रादर्शयन्.





## ( ८ ) ( उपासनासामर्थ्यचमत्काराः )

वाचकाः ! यदा खलु लोकोद्धारः कर्तव्यस्तदा तत्कालिकैर्मुनिवरैर्वा लोकाग्रणीभिर्वाऽवश्यं येनकेनापि मार्गेण लोकानां विश्वाससंपादनाय तन्मनांस्याकर्षणीयानि. यद्यपि तेचोपाया भिन्नास्तथापि सनातनधर्मनिवासेऽस्मिन्नार्यावर्ते प्रायः सर्व एव जना धर्मं तदनुष्ठानं तन्मूलकांश्च चमत्कारानेव बहु मन्वते. अतएव शिवराजकालिकैः साधुवरैर्विविधचमत्कारैः सर्वेषां जनानां मनांस्याकृष्टानि.

सज्जनाः ! केवलमुदाहरणार्थं श्रीसमर्थचमत्कारवृत्तप्रदर्शनात् पूर्वमहमन्येषां साधूनां द्वित्रांश्चमत्कारान् प्रदर्शयामि.

एकदा शिवनरपतिः केनचित्प्रसंगेन पुण्यपत्तनसमीपमागतो मनस्यकरोत्—इतश्च देहूग्रामो नातिदूरः. तत्र च तुकारामनामानः साधुवरा निवसन्ति. तेषां प्रभावश्चास्मद्गुरुचरणानां श्रीसमर्थानां मुखादेव श्रुतः. तत् 'श्रेयांस्यनतिक्रमणीयानि' इति न्यायेन तान् साधुवरान् प्रत्यक्षीकृत्य स्वराजधानीं गमिष्यामि इति. जगाम च देहूग्रामं. तत्र च भगवद्भक्तौ निमग्नान् तुकारामपादान् वीक्ष्य सानन्दस्तूष्णीं नमस्कृत्य पृष्टकुशलः पुनः प्रत्यागमनानुज्ञां पप्रच्छ. ते च साधुवराः—'मध्यान्हकालः संवृत्तः श्रीपाण्डुरंगस्य प्रसादोऽपि सन्नद्ध एव. तत्स्नात्वा प्रसादं गृहीत्वा गन्तुमर्हसि' इत्यकथयन्.

शिवनृपस्तु सादरं सविनयं—बहवः सैनिका मया सह समागताः, अश्वाद्योऽपि बहवः पशवः, सर्वेषां व्यवस्थाकरणमशक्यमिति भवद्भिराज्ञा देयेति विज्ञापयामास. ते तु साधुशिरोमणयः

शिवनृपतेरिदं भाषणं निशम्य सहासं—सर्वं पाण्डुरंगो जानाति. तस्यैव चिन्ता नान्यस्य. भवद्भिरधुना स्नातव्यमित्यूचुः.

अथ शिवराजे तूष्णींभूते ते सज्जनाः स्वपुत्रमाहूयादिशन्—नारायण ? शिवनृपतेः सेनानिवेशं गत्वा सर्वेभ्यः पर्याप्तमन्नं देहीति. नारायणोऽपि गृहीतमुष्टिमात्रचणकग्रासः सेनानिवेशं गत्वा सर्वानपि सादिन आहूय पर्याप्तमन्नं ददौ. विज्ञापयामास च सर्वान् सैनिकान्—भोजनार्थमागच्छत—इति.

अथ राजाऽपि स्नातस्तथा तैः साधुवरैर्भोजितःससैन्यं यथा स परमैश्वर्यसंपन्नोऽपि परं विसिष्मिये. कृतभोजनः शिवराजस्तुकारामसाधूनामाज्ञां गृहीत्वा स्वराजधानीं प्रत्याजगाम.

एवमेवैकदा शिवभूपालः सातारानगरं गतः. तत्र च श्रीसमर्था अप्यागच्छन्. तदानीमेव श्रीसमर्थानां दर्शनार्थं निगडीमठान्निर्गत्य श्रीरंगनाथस्वामिनोऽपि सातारानगरमाययुः. श्रीरंगनाथस्वामिनां वेषस्तु कस्याऽपि बलाढ्यस्य योद्धुरिवासीत्. ते तु महान्तमश्वमारुह्य सर्वाणि खड्गादीनि शस्त्राणि बिभ्रतः पुरोधावच्छिष्यगणा एव सर्वत्र व्यचरन्. तांस्तथावेषान् समागच्छतो वीक्ष्य शिवराजः—कथमेते साधवः—इति किंचिदशंकत. तथापि श्रीरंगनाथस्वामिषु श्रीसमर्थानां प्रेम जानंस्तानादरातिशयेन सत्कारयामास.

अथ समर्थास्तद्भावमभिजानन्तस्तस्मिन्दिने तैः स्वामिभिः समं सहभोजनं न्यषेधन्. प्रैषयंश्च संदेशं दूतद्वारा—'तत्रैव युष्माभिर्भोक्तव्यं न वयं युष्माभिः सह भोजनमिच्छाम' इति. रंगनाथस्वामिनोऽपि श्रीसमर्थानामाशयं जानन्तः 'यथाऽऽज्ञा' इत्युक्त्वा स्वशिष्यान् पाकसिद्ध्यर्थमाज्ञापयन्. यदा च ते नास्ति पाकसामग्रीति जगदुः तदा

श्रीरंगनाथस्वामिनस्तु क्रुद्धाः—'यच्च लभ्यते तदेव पचनीयं तदर्हमनर्हं वेति न विचारणीयम्. किंबहुना जल्पितेन, एष मत्तो माहिष एवाद्य पचनीय' इति जगदुः. ते च शिष्यास्तदाज्ञां शिरसि कुर्वन्तस्तथैवाकुर्वन्.

श्रीसमर्थाश्चाद्यापि अभुक्ताः शिवराजमवदन्—शिवराज? यद्यपि मदीयरंगनाथो भ्रष्टस्तथापि स मामकीन एव. स त्वद्यापि भुक्तो न वेति वीक्ष्य पश्चात्प्रत्यागत्य वयं भोक्ष्यामहे. त्वं तु भुंक्ष्वेति. इमामाज्ञां विनयेनानंगीकुर्वन्तं शिवराजं वीक्ष्य श्रीसमर्थास्तेन सहैव रंगनाथस्वामिनिवासमागच्छन्. ते च तत्र प्रविश्य यदा पश्यन्ति तदा निहतस्य माहिषस्यास्थीनि चर्म चाक्षिगोचरो बभूव.

श्रीसमर्थाश्च स्वागमनं निशम्य वन्दनार्थमागच्छतः श्रीरंगनाथस्वामिनः प्रेक्ष्यागदन्—वत्स? रंगनाथ? त्वं भ्रष्टोऽसि. अरे? ब्राह्मणो भूत्वा माहिषं निहत्य कथं भक्षयसि? इति. ते तु परमभगवद्भक्ताः 'नायं ममापराधः किंतु गुरोरेव. यद्यप्यहं भ्रष्टस्तथापि शिष्यस्तु युष्माकमेवेति' निगदन्तः श्रीसमर्थमुखं प्रेक्ष्य जहसुः. श्रीसमर्था अपि रंगनाथस्वामिनां मुखं प्रेक्ष्य. एवं परस्परं वीक्ष्य प्रहसन्तौ तौ साधुवरौ समीक्ष्य राजा शिवः परं विस्मितोऽभूत्. अथ श्रीसमर्था रंगनाथस्वामिनः प्रत्यवदन्—रंगनाथ? अहं चात्रैव भोक्तुमिच्छामि. तत्पात्राणि स्थापयेति. गुर्वाज्ञा प्रमाणमिति निगद्य प्रयातेषु रंगनाथस्वामिषु श्रीसमर्थाः शिवाजिनृपमाहुः 'राजन्? वयमिदानीं रंगनाथेन समं भोक्ष्यामहे. त्वं तु कथं मन्यस' इति. शिवराजस्तु—'नाहं किमपि जानामि. केवलं गुर्वाज्ञां पालयिष्यामि' इति.

अत्रान्तरे रंगनाथस्वामिभिः स्थापितेषु पात्रेषु श्रीसमर्थाः शिवराजेन सममुपविष्टाः समीपपात्रोपविष्टान् रंगनाथस्वामिनो वीक्ष्य प्रजहसुः. तेऽपि तान्. ततः श्रीसमर्था रंगनाथस्वामिनः प्रत्याहुः—वत्स? रंगनाथ? किमर्थमयं माहिषोऽत्रैव स्थापितः. वयमधुना भुंजामहे. अयमपि स्वभक्ष्यं घासादिकं भक्षयतु इति. गुरोराज्ञा प्रमाणमित्युक्त्वा श्रीरंगनाथस्वामिषु तन्माहिषचर्म तीर्थेन प्रोक्षयत्सु सत्सु स माहिषः पूर्ववदुत्थाय वनं जगाम. राजा चेदमपूर्वं कर्म प्रेक्ष्य नितरां व्यस्मयत.

अथ तस्मादेव पाचितमाहिषमांसभाण्डान्निर्गच्छन्त्यसंख्यानि पक्वान्नानि भुंजानास्ते श्रीसमर्था विस्मितं शिवराजमवोचन्—शिवराज? विविधवेषधारिणो विविधाचाराः साधवो विराजन्ते. तत्र विचिकित्सा न कार्या. साधुत्वं तु ज्ञानाधीनं न तु तत्र वेषस्य वा जातेर्वाऽपेक्षा. जात्यादयस्तु केवलं प्रारब्धकर्माधीना यथा कर्म लभ्यन्ते तथैव तेऽपि व्यवहरन्ति. सज्जनाः कदापि जात्यादीनुद्दिश्य साधूनां साधुत्वं न शंकन्ते. तथैव वेषादीनपि इति. राजा च श्रीसमर्थानां मनोज्ञानसामर्थ्यं वीक्ष्य परं लज्जाकुलस्तौ द्वावपि साधुवरौ प्रेम्णा ववन्दे.

एवमेवैकदा श्रीशिवराजः श्रीगोदावरीं स्नातुं गतो राक्षसभुवनसमीपे निवेशितसेनानिवेशोऽभूत्. तत्र च रामीरामदासनाम्ना प्रसिद्धानां श्रीसमर्थज्येष्ठबंधूनां श्रेष्ठानां साम्प्रदायिकैः शिष्यैर्गीतानि भक्तिपद्यानि निशम्य सानन्दस्तेषां दर्शनार्थं कृतसंकल्पः सुष्वाप. अचिरादेव स शिवराजः स्वप्ने शुभ्रवस्त्रं गोपीचन्दनचिन्हांकितं जपमालाविभूषितं साधुवरमपश्यत्. कृतनमस्क्रियस्तस्मादेष सा-

धुवरात् श्रीफलं तथा स्फटिकमालां च प्रसादत्वेन लेभे. गृहीत्वा च तं प्रसादं शिवराजस्तं साधुवरं नामनिवेदनाय विज्ञापयामास. स तु साधुश्रेष्ठस्तस्य विज्ञप्तिं निशम्य सस्मितमुखः 'अस्य देहस्य नाम रामीरामदास इति. अहं च रघुपतिं सेवमानो गृहस्थाश्रमी निवसामि जांबग्रामे. तद्यदि न किंचित्कार्यगौरवं तदाऽवश्यं स्वीकार्यो रघुपतिप्रसाद' इति वदन्नेव तिरोदधे. राजा च प्रबुद्धस्तं प्रसादं प्रत्यक्षतः पश्यन्विस्मितस्तदाज्ञां स्मरन् जांबग्राममाजगाम. यदा तु शिवराजो जांबग्रामं प्रविश्य श्रीश्रेष्ठानां गृहस्य पुरतोऽगणेऽतिष्ठत्, तदा श्रीश्रेष्ठाः काकबलित्यागार्थं बहिरागच्छन्. श्रेष्ठाश्च कृताभिवादनं शिवराजं विलोक्य सन्तुष्टाः प्रसादग्रहणार्थमादिशन्. राजानं च चिन्ताकुलं वीक्ष्य विदिताशयास्ते सर्वैः समं भोजनार्थमकथयन्. अचिरादेव तत्रापि शिवराजः साधुवरतुकारामगृहेऽनुभूतं भोजनसौख्यं लेभे. तेन चोपासनासामर्थ्यस्यालौकिकत्वे संजातश्रद्ध ईश्वरसामर्थ्ये जातविश्वासः स स्वराजधानीमाययौ.

प्रियवाचकाः? निरूपिताः साधूनां स्वोपासनासामर्थ्येन विहिता विचित्राः प्रकाराः, सन्ति च सहस्रश इमाः कथास्तथापि केवलमत्र स्वरूपदर्शनार्थमेव मया द्वित्रा निबद्धाः. सज्जनाः? न खल्विमाः सर्वा मिथ्या भवितुमर्हन्ति. नेमे प्रसंगा येन केनापि स्वल्पबुद्धिना मानवेनानुभूताः किंतु लोकोत्तरबुद्धिमता क्षत्रियकुलावतंसेन सनातनधर्मरक्षकेण गोब्राह्मणप्रतिपालकेन शिवराजेन स्वयम्.

किंच—इदं शक्यमिदमशक्यमिति सर्व एव जनाः स्वशक्तिमनुलक्ष्यैव निर्णयन्ति. पिपीलिकाया यदशक्यं कर्म तदेव तदधिकब-

लेन प्राणिनाऽनुष्ठितं पश्यामः. एवमेवोत्तरोत्तरं. एवं चोत्तरोत्तरं शक्त्याधिक्यं पश्यन्तोऽपि स्वशक्तिमनुसृत्यैव 'इदमशक्यं' इति वदाम एव.

वस्तुतस्तु—साधवो यानि कर्माणि कुर्वन्ति तानि लोकोत्तराण्येव भवितुमर्हन्ति. अत्र कारणं च न तेषां मध्ये वसन्ती मानवी शक्तिः, किंतु मानवीं शक्तिं निहत्य प्रज्वलन्ती चैतन्यशक्तिः. तथाच तस्याश्चैतन्यशक्तेर्लोकोत्तरत्वेन तत्कृतानि कर्माण्यपि लोकोत्तराण्येव भवितुमर्हन्ति. तस्मादेषु साधुकार्येषु साधारणप्रज्ञा एव जनाः संदिहते नतु विचारशीलाः. अस्तु.

वाचकमहाभागाः ? साम्प्रतं सनातनधर्मोद्धारबद्धकक्षैरस्मच्चरित्रनायकैः किं किमनुष्ठितमिति पश्यामः.

लोकोद्धारार्थं लोकसंग्रहं वांच्छता धुरीणेनानुष्ठेया उपाय द्विविधाः. प्रथमः—स्वसामर्थ्यप्रदर्शनेन साक्षादेव सामान्यजनानां स्वस्मिन्विश्वास उत्पादनीयः. द्वितीयस्तु—तदग्रेसराणामेव पूर्वोक्त रीत्या विश्वासः संपादनीयः. अत्र च द्वितीय एवोपायः सुगम इति सर्वसंमतं. यतः साधारणबुद्धिशालिनो जना नियमेन लोकोत्तरबुद्धिमतां जनानां वशा एव. तथाच प्रधानमल्लनिबर्हणन्यायेन तेष्वेव वशीकृतेषु अन्ये तदीया अनुयायिनो वशीकृता एव भविष्यन्ति. इदमालोच्य श्रीसमर्थैः स एवोपायः प्रथमं स्वीकृतः. स च कथं समाचरित इति वयं क्रमेण द्रक्ष्यामः—

एकदा चिंचवडक्षेत्रे निवसतां श्रीमोरयादेवनाम्नां सिद्धान विज्ञप्त्या श्रीसमर्था अपि चिंचवडक्षेत्रं प्रति जग्मुः. मोरयादेवैरपि सम्यक्सत्कृतास्तत्रैव किंचित्कालं तस्थुः. तदानीमेव श्रीतुकारामसा-

धवोऽपि समागताः. ततश्चैकदा तुकारामसाधवः श्रीसमर्थाश्च मोरयादेवान् प्रत्यूचुः—अद्य वयमेकान्ते भोक्ष्यामह इति. मोरयादेवा अपि तथैवाकुर्वन्. तत्र च श्रीसमर्थानां समीपे चत्वारि, तुकारामसाधूनां समीपे द्वे स्वसमीप एकमिति पात्राणि स्थापितानि. सिद्धे च भोजने सर्वे ते सत्पुरुषाः स्वस्वपात्राण्यलंचक्रुः. तदानीं तुकारामा मोरयादेवानवदन्—युष्माभिः स्वोपास्यदेवता गणपतिरत्र भोजनार्थं समाव्हयनीयः. समागते गणपतौ सर्वेऽप्यन्ये देवा आगमिष्यन्तीति. ते तु भगवद्भक्ता अपि 'कुतः खलु कलियुगे ईदृशं भक्तिसामर्थ्यं' इत्येवावदन्.

अथ श्रीसमर्थैर्ध्यानमार्गेणाहूताः सीतारामलक्ष्मणमारुतयो निभृतमागत्य स्वस्वपात्राण्यलंचक्रुः. तुकारामसाधुभिरपि ध्यातो विठ्ठलेशः सभार्यः स्वपात्रमलंचक्रे. तदानीं च ध्यातो गजाननोऽपि स्वपात्रमुपविवेश. मोरयादेवास्तु इदमुपासनासामर्थ्यमवलोक्य नितान्तं विस्मितास्तौ महताऽऽदरेणापूजयन्.

एकदा श्रीसमर्थाः शिष्यगणेन समं चाफळमठान्निर्गत्य परळीमठं गन्तुं प्रस्थिता मध्ये पाडळीग्रामं प्राप्ताः. तत्र मध्यान्हकालः संवृत्त इति सर्वैः शिष्यगणैर्विज्ञप्ता अत्रैव स्नात्वा भुक्त्वा ततोऽग्रे गमिष्याम इति तथैव श्रीसमर्था अन्वमन्यन्त. ततश्च केचन शिष्याः शीघ्रमेव स्नात्वा ग्रामे भिक्षार्थं गताः. तस्य ग्रामस्याध्यक्षोऽतिकुटिलमतिः समं स्वानुचरैर्ग्रामीयन्यायशालायां ( चावडी ) समुपविष्ट आसीत्. स तु तान्भिक्षार्थं पर्यटतः शिष्यान् वीक्ष्य संतप्तो बहु निरभर्त्सयत्—'बलिष्ठा यूयं भिक्षत ? कौपीनधारिणोऽर्धनग्ना एव ग्रामे पर्यटत ? नास्ति लज्जा ? कोऽयं धर्मः' इत्यादिभिर्दुरु-

क्तिभिरताडयत्. निरवासयच्च तान् सर्वस्वं हृत्वा तस्माद्ग्रामाद्बहिः. ते च शिष्याः समागत्य सर्वं वृत्तं श्रीसमर्थेभ्यः कथयामासुः. निशम्य च तं वृत्तान्तं ते स्मयमानाः 'साम्प्रतमस्मिन् ग्रामे न स्थातव्यं' इति सर्वानपि शिष्यानूचुः.

उक्त्वा चेत्थं यदा महता जवेन श्रीसमर्थाः शिष्यैः समं तस्माद्ग्रामान्निर्गतास्तदानीमेव तस्मिन् ग्रामेऽग्निप्रवेशोऽभूत्. तं च महान्तं वन्हिप्रसरं वीक्ष्य दुःखाकुलाः सर्वेऽपि ग्रामवासिनः श्रीसमर्थशिष्यापमानस्येदं फलमिति मन्यमानास्तत्क्षमायाचनाय धावन्तस्तत्स्थलमाजग्मुर्यत्र श्रीसमर्थाः शिष्यैः समं पूर्वमवस्थिताः, परन्तु तत्र समर्थानलब्ध्वा ते सर्वेऽपि दुःखाकुला ग्रामं यदाऽपश्यंस्तदा महानेको वानरः स्वहस्तगृहीतया महत्योल्कया सर्वाणि गृहाणि प्रोज्वालयतीति अद्राक्षुः. ततश्च ते महाशोकाकुला ग्रामवासिनो जनास्तं ग्रामाध्यक्षं निर्भर्त्सयन्तो महता जवेन श्रीसमर्थानन्वधावन्. समर्था अपि दयाकुलास्तान् दीनान् पश्चाद्धावतो जनानवेक्ष्यावातिष्ठन्त. ते सर्वेऽपि जनाः समं ग्रामाध्यक्षेण 'केवलं क्षमध्वं' इत्युक्त्वा श्रीसमर्थचरणकमलयोर्निपेतुः. श्रीसमर्थाश्च सर्वानपि सान्त्वयित्वा 'ग्रामं निरीक्षध्वं' इति प्रोचुः. अथ यदा ते पश्चात्स्वग्रामं पश्यन्ति तदा स एव वानरः स्कंधेन घटमुद्वहन्नानीतेन जलेन गृहाणि सिंचति. वन्हिं च शमयति. इत्यपश्यन्. तद्वीक्ष्य सानन्दा ग्रामवासिनः श्रीसमर्थैः समं स्वग्राममागता न किंचिदपि दग्धमित्यद्राक्षुः. सर्वभावेन श्रीसमर्थान् सत्कृत्य ते पूजयामासुः.

दक्षिणापथ उडपीनामकं महाक्षेत्रमस्ति. तत्र मध्वाचार्या नाम महान्तः सत्पुरुषा आसन्. ते तु कर्णोपकर्णिकया श्रीसमर्थयशस्तो-

मं निशम्य सन्तुष्टास्तद्दर्शनार्यैकं शिष्यं स्वमुद्रांकितपत्रेण सह प्रेषयामासुः. स च शिष्यः क्रमेण चाफळमठमागच्छन् कदाचिदेकदा नदीतीरे स्वानुचरैः समं भोजनार्थमवसत्. अनुचरास्तु दूरं स्थित्वा स्वस्वपाकमकुर्वन्. एष तु मध्वाचार्यशिष्य एकाकी दूरं स्थितः स्वयं पाकसिद्धिमकरोत्. सिद्धे पाके जलानयनार्थं नदीं गतोऽकस्मादागतेन शुना दूषितं स्वपाकमपश्यत्. तद्वीक्ष्य दुःखाकुलोऽयचिन्तयत् 'पुनः पाकविधानं नाम महत्कष्टम्. तस्मादयमेव पाको विष्णुतीर्थेनाभिषिक्तो भक्षणीयः. नहि परमपवित्रं विष्णुपादोदकादन्यत्. पवित्रं हि अपवित्रतां विनाश्य स्वस्वरूपं वस्तु विधत्त इत्यपि दृष्टचरं तस्मादित्थमेव करणीयमि'ति. अन्वतिष्ठच्च तथैव.

अथ कतिपयदिवसैः स चाफळमठं प्राप्तः सर्वैरपि सत्कृतः श्रीसमर्थानां दर्शनाय ययौ. नमस्कृत्य च श्रीसमर्थान् गुरुदत्तं पत्रमप्यर्पयामास. पत्रमनुवाच्य च श्रीसमर्थाः परं सन्तुष्टा अभवन्.

अथ स्नानार्थं विज्ञप्तः स शिष्यः प्रावोचत्—वयं वैष्णवसम्प्रदायानुयायिनः. सम्प्रदायस्यायं नियमः—यदन्यस्य पाको न ग्राह्य इति. तद्वयमेव पक्ष्याम इति. ततश्च श्रीसमर्थानामाज्ञया श्रीदिवाकरभट्टैः प्रदत्तं सर्वमपि भोजनसाहित्यं गृहीत्वा स्वयं पाकमकरोत्. अत्रान्तरे श्रीसमर्थाः सर्वानवदन्—सर्वेषां पात्राणि स्थापयित्वा सर्वे पदार्थाः परिवेषणीयाः. घृतं तु वयं स्वयमेव परिवेषयिष्याम इति.

अथ सर्वेषु पात्रेषु परिवेषणपरिपूर्णेषु श्रीसमर्थाः स्वयं घृतभाण्डमादाय घृतपरिवेषणेच्छया प्रथमं मध्वाचार्यशिष्यपात्रमागत्य घृतं पर्यवेषयन्. स्वपात्रं श्रीसमर्थैः स्पृष्टमवलोक्य स मध्वाचार्यशिष्यः क्रुद्धः—'किमिदं भवद्भिरनुष्ठितं ? साम्प्रतमिदमन्नं त्याज्य-

मेव संवृत्तं. न यूयं वैष्णवसम्प्रदायं जानीथ?' इत्यादिभिः कठोरवचनैः श्रीसमर्थान्निरभर्त्सयत्. श्रीसमर्थास्तु तदीयं कोपवचनं निशम्य घृतभाण्डं धरणितले निक्षिप्य साक्रोशं रुरुदुः. कल्याणादिभिः शिष्यैर्विज्ञप्ता अपि—भोनाथ? जानकीपते? किं मां शुनोऽप्यस्पृश्यमजनयः? अयं च देहो ब्राह्मणकुलोत्पन्नोऽपि विष्ठाभक्षकात्सारमेयादप्यमेध्यः संवृत्त. इति भूयोभूय उच्चार्य विलपन्तो रुरुदुः. कल्याणस्वामिप्रभृतयः शिष्या अस्य वाक्यस्यार्थं न जानन्तो मूका इव तस्थुः. मध्वाचार्यशिष्यस्तु श्रीसमर्थानामिदं वाक्यं निशम्य संजातस्मृतिः परं लज्जितः श्रीसमर्थचरणारविन्दयोरपतत्. तं चोपतापिनं श्रीसमर्था अनुगृह्य भोजनार्थमादिशन्. सर्वेऽपि जना इदं श्रीसमर्थानां सामर्थ्यं विलोक्य विस्मिताः सानन्दं भुक्त्वा स्वस्वस्थानं जग्मुः.

एकदा श्रीमौनीबुवानामकाः सत्पुरुषाः संन्यासिनः पाटगांवग्रामे अवसन्. ते च सर्वथाऽतीव योग्या इति तेषामसंख्याः शिष्या आसन्. ते च सर्वे शिष्याः श्रीसमर्थानां यशस्तोमं निशम्य संजातकुतूहलाः श्रीसमर्थानां परीक्षां गृहीतुमैच्छन्. मौनिस्वामिभिः भूयोभूयो निषिद्धा अपि ते तस्मान्निश्चयान्न व्यरमन्. ततश्च चाफळमठमुद्दिश्य निर्गतास्ते मार्गे माहुलीक्षेत्रमाजग्मुः. तत्र च स्नात्वा स्वयंपाकविधाने व्यग्रा अभवन्.

अथ तदानीमेव श्रीसमर्थाः कल्याणस्वामिन आहूय—कल्याण? अद्य वयं स्नानार्थं माहुलीक्षेत्रं गमिष्याम इत्युक्त्वा तैः समं माहुलीक्षेत्रं प्रातिष्ठन्त. गत्वा च माहुलीक्षेत्रं स्नानार्थं नदीमवतीर्णाः श्रीसमर्थाः कल्याणस्वामिन आहुः—कल्याण? क्षुन्मां परं बाधते.

तद्यत्किंचिदपि भक्ष्यं चेद्देहि म इति. कल्याणस्वामिनोऽपि—नास्ति पर्युषितात् 'स्थालीपिष्टात्' अन्यत्किमपि इति निगद्य 'तदेव देहि' इति श्रीसमर्थैराज्ञप्तास्तददुः. तच्च गृहीत्वोरुदघ्ने जलेऽवस्थिताः श्रीसमर्थाः खण्डशोऽभक्षयन्. तदेतदपूर्वं वर्तनं काषायवस्त्रधारिणां वीक्ष्य ते सर्वेऽपि शिष्याः प्रहसन्तस्तान् श्रीसमर्थान्निनिन्दुः. समर्थाश्च तथैव भक्षयन्तः पुनरपि कल्याणस्वामिन आहुः—कल्याण, नाहमिदं शुष्कं भक्षयितुं समर्थस्तत्त्वं कुतश्चिद्दुग्धं वा तक्रं वा दधि वा गृहीत्वाऽऽगच्छेति.

अत्रान्तर एव कस्यचित्तद्ग्रामवासिनो विप्रस्य गौर्महता जवेन धावन्ती तत्रैवागच्छत्. तामनुधावन्ती ब्राह्मणी संमुखमागच्छतो जनान् धेनुप्रतिबंधार्थमवोचत्. तैश्च प्रतिबद्धा सा गौर्महता वेगेन समुन्नतात् स्थलादात्मानमधस्तादपातयत्. पंचत्वमगाच्च. ब्राह्मणी तु शोचन्ती तस्याः सन्निधौ निषसाद. कल्याणस्वामिनस्तु मृताया धेन्वाः समीपं गत्वा—मातर्धेनो ? उत्तिष्ठ, देहि दुग्धं. गुरुचरणाश्च दुग्धं विना भक्ष्यभक्षणेऽसमर्थास्तदपेक्षन्ते इति प्रार्थयामासुः. समाप्तायामेव प्रार्थनायां सा धेनुरुत्तस्थौ. अदाच्च प्रभूतं दुग्धं. तदेतत्सर्वं वृत्तं प्रत्यक्षीकृत्य साश्चर्यास्ते मौनिस्वामिशिष्याः सहसा समागत्य श्रीसमर्थचरणसरोजे नेमुः.

वाचकाः ? एवंरीत्या ये खलु मान्याः सत्पुरुषास्तच्छिष्याश्चासंस्तेषां विश्वासं स्वस्मिन् समपादयन्. ततश्च ये खलु विद्यया मान्या आसंस्तेषामपि विश्वाससंपादनार्थं श्रीसमर्थाः प्रायतन्त.

सज्जनाः ? प्रायः सर्वत्रैवेदं दृश्यते—यत्—अज्ञा जना विद्वद्वशा भवन्ति. नह्यज्ञानिनो जना विद्वद्भिरनुष्ठितां नियमपद्धतिमति-

क्रामन्ति. तस्माद्विदुषां वशीकरणे तदनुयायिनोऽज्ञा अपि वशा भवन्ति. अस्मिन्नार्यावर्ते तु ब्राह्मणा एव धार्मिकत्वाद्बुद्धिमत्त्वात् सर्वेषां परजातीयानां पुरोगा इति सर्वसम्मतं. उपरितननियमं मनसिकृत्वा श्रीसमर्था ब्राह्मणानामादरेऽनलसा अभवन्. नानाविधैरुपायैस्ते ब्राह्मणान् स्वपक्षपातिनोऽकुर्वन्. तदर्थमपि तैर्बहुविधाश्चमत्काराः कृताः.

एकदा कपिलाषष्ठीयोगः समायातः. तस्मिन् पुण्यकाले जनाः सर्वेऽपि तीर्थेषु स्नानार्थमगच्छन्. श्रीसमर्थाश्च माहुलीक्षेत्रं जग्मुः. तत्र च स्नात्वा सर्वमाह्निकं समाप्य निर्गता दक्षिणादानार्थं ब्राह्मणैर्विज्ञप्ताः सर्वेभ्य एव नदीपाषाणानदुः. ब्राह्मणास्तु पाषाणान् दक्षिणात्वेन प्रदत्तान् वीक्ष्य क्रुद्धाः सहस्रशोऽपशब्दान् प्रयुंजानास्तान् पाषाणान्नद्यां चिक्षिपुः. तेषु च 'चावरे'उपनामकः कश्चन विप्रः श्रद्धालुरासीत्तेन च स दक्षिणापाषाणः श्रद्धया पूजयितुं स्ववस्त्रे स्थापितः. ततः स विप्रो मध्याह्ने स्वगृहं प्राप्तस्तं पाषाणं सुवर्णमयं वीक्ष्य सानन्दस्तं सर्वान् ब्राह्मणानदर्शयत्. ते तु तं सौवर्णं प्रेक्ष्य दुःखाकुलाः शोचन्तो निन्दन्तः स्वानि भाग्यानि सर्वेऽपि माहुलीब्राह्मणाः शिरसा प्रभूतान् पाषाणान् वहन्तः सज्जनगडदुर्गमाजग्मुः. द्वारपालनिवेदितागमनाः श्रीसमर्थाः सहसा बहिः समागत्य महतादरेण सर्वं वृत्तमापृच्छ्य श्रुत्वा च सर्वं ब्राह्मणानाहुः—भूदेवाः ? इदं खलु कालस्य माहात्म्यं. न मम. ह्यः खलु कपिलाषष्ठीयोग आसीत्तेन मया प्रदत्ताः पाषाणाः सौवर्णाः संवृत्ताः. अस्तु. मध्याह्नकालस्तु जात एव. तद्भवन्तः कृपया श्रीरघुपतिप्रसादं गृहीत्वा विश्राम्यन्तु. स्वगृहगमनसमये यावन्तः पाषा-

णा भवद्भिर्नेतुं शक्यास्तावन्तो नेयास्ते सर्वेऽपि सौवर्णा भविष्यन्तीति. ब्राह्मणा अपि श्रीसमर्थानां वचसि श्रद्दधाना: स्नात्वा भुक्त्वा च सौवर्णान् पाषाणान् गृहीत्वा मुमुदिरे.

वाचका: ? उपरितनवर्णिताभ्य: कथाभ्यो भवद्भि: सारांशो गृहीत एव स्यात्——यत्–श्रीसमर्था लोकोद्धारचिकीर्षया कथं तत्तत्स्थानाग्रेसराणां स्वोपासनासामर्थ्यप्रदर्शनेन विश्वासं संपादयामासुरिति. यद्धि भव्येच्छया क्रियते तत्सर्वं साध्विति सार्वजनीनम्. साम्प्रतं समागतानां शिष्याणां विश्वाससंपादनार्थं ये सिद्धिचमत्कारा: कृतास्तानुदाहराम:——

सज्जना: ? सामान्येनेह जगति जना: परप्रत्ययनेयबुद्धय एव भवन्ति. ते च स्वाग्रेसरैराहृता: पशव इव कस्मिंश्चित्कार्यविशेषे प्रवर्तन्ते. परन्तु तेषां तत्कार्यकर्तृत्व आत्मविश्वासो यावन्न जायते तावत्तत्कार्यं सम्यङ् न भवति. अतो लोकोद्धारचिकीर्षुणा नरेण प्रथमं लोकाग्रेसराणां केनाप्युपायेन साहाय्यं लब्ध्वा तत्प्रेषितानां मूढजनानां विश्वाससंपादनार्थं महान् यत्न आस्थेय:. एवं कृत एव तस्याभीष्टसिद्धिर्भवति नान्यथा. श्रीसमर्थाश्च सर्वमिदमवधार्य शिष्यसंग्रहार्थं प्रायतन्त.

एकदा शिवराज: ससैन्यं कुतश्चित्कार्यप्रसंगतश्चाफळमठसमीपत एव गच्छन् 'श्रीसमर्था: समीप एव निवसन्ति' इति निशम्य तान्दिदृक्षुस्तत्र ययौ यत्र ते कल्याणस्वामिभि: सममतिष्ठन्. प्रणिपत्योत्थिते संजातकुशलप्रश्ने राजनि गन्तुमनुमतिं याचति सति श्रीसमर्थास्तमाहु:–राजन् ? मध्याह्नकालसूर्यप्रखरकिरणै: श्रान्तोऽसि. तदत्रैव विश्रम्य भुक्त्वा पश्चाद्गमिष्यसि. तदा

ज्ञापय स्वसेनापतिं कृत्स्नसैनिकनिवासार्थं' इति. सोऽपि तां गुर्वाज्ञां स्वीकृत्य तत्रैव सेनां निवेशयामास.

अथ समर्थैः स्नानार्थं प्रेरितः शिवराजः स्नानार्थं ययौ. सर्वेष्वपि सैनिकेषु स्नाननिमग्नेषु कल्याणस्वामिनः श्रीसमर्थानां पुरतो मुकुलितहस्तास्तस्थुः. श्रीरामदासस्वामिनस्तु कल्याणस्वामिनां मनोगतं बुद्ध्वा प्रहस्यागादिषुः—कल्याण ? नास्ति चिन्तायाः कारणं ! या तव पुरस्ताद्गुहा दृश्यते तस्यां कृत्स्नं भोजनं सिद्धमस्ति. त्वं च तत्प्रवेशद्वारस्थं पाषाणमपनीय सत्यमिदं न वेति पश्येति. कल्याणस्वामिनोऽपि अनवसितएव श्रीसमर्थानां वाक्ये सहसा तं पाषाणं दूरीकृत्य यदा पश्यन्ति तदा तथैवासीत्. ततश्च शिवराजप्रभृतयः क्षत्रियास्तथा तदीयाः सैनिकाश्च यथायोग्यमासीनाः श्रीसमर्थानां कृपाप्रसादं जगृहुः.

अथ समाप्ते भोजने श्रीशिवराजोऽभिवंद्य श्रीगुरुचरणौ विनयेन पप्रच्छ. गुरुचरणाः ? अद्य यादृशो युष्माकं कृपाप्रसादो गृहीतस्तथैव देहूग्रामे तुकारामसाधूनां, जांबग्रामे युष्मज्ज्येष्ठभ्रातॄणां रामीरामदासानामपि गृहीतः. तदेतद्वीक्ष्य मम महती जिज्ञासा संजाता कथमेतद्भवतीति. तामिमां जिज्ञासां गुरुपादा एव पूरयितुं समर्था इति. इमं च शिवराजस्य प्रश्नमाकर्ण्य सस्मितवदनाः श्रीसमर्था आहुः—राजन् ? नास्त्यत्रातिविस्मयकरं किमपि. इयं खलु भगवतः कृपाप्रसादलब्धा योगसिद्धिः—यथा हि त्वं दीर्घोद्योगैः परां सम्पदं राज्यं चार्जयसि तथैवैते भगवद्भक्ता अलौकिकीं सिद्धिमनुष्ठानैर्लभन्ते. यथाहि लौकिकी संपत्तिरल्पेनैव परिश्रमेण साध्या तथा नेयमलौकिकी सम्पत्तिः. सा तु सुदीर्घोद्योगमपेक्षते. तादृशीं सिद्धिं

भगवद्भक्ता एव जानन्ति नेतरे जनाः. इतरे जनास्तु भगवद्भक्तान् कौपीनधारिणो वीक्ष्य दरिद्रानेव मन्वते. परन्तु भगवद्भक्तान् भगवदैश्वर्यभोगिनो न जानते. राजन्? यदि नैवं स्यात्तदा ते किमर्थं सांसारिकं सुखं त्यक्त्वा दुःखमयीं तपस्यां कुर्युरिति त्वं स्वयमेव विचारयेति. शिवराजश्चेदं भाषणामृतं निपीय सन्तुष्टः ससैन्यं स्वराजधानीं ययौ.

एकदा श्रीसमर्था यथेच्छं नानारण्यानि पर्यटन्तश्चाफळमठमागन्तुं प्रवृत्ताः. मार्गे च पाटणग्रामसमीपे कोयनानदी वर्षावारिपरिपूर्णा महता जवेनोभयकूले कर्षन्ती अवहत्. तां चोत्तितीर्षवस्तस्या जलेऽवातरन्. किंतु महता जलवेगेनाकृष्टा भयंकरजलचक्राक्रान्ता ममज्जुः. तदानीमेवोभयतीरवासिनो जनाः किंकर्तव्यतामूढाः 'संन्यासी नद्यां मग्नः' इत्युच्चैश्चुक्रुशुः. तं चाक्रोशं निशम्य 'चान्दरावपाटणकर' नामा पाटणग्रामाध्यक्षो नदीतीरमागत्य शुशोच. अन्वेषयति स्म श्रीसमर्थान् जलमज्जकैः समन्तात्. ते च जलमज्जकाः सुकुशला अपि स्वकर्मणि यशो नालभन्त.

अथ तद्दुःखदुःखितः स चांदाजीरावस्तद्वृत्तं पत्रमारोप्य दूतद्वारा चाफळमठं प्रैषयत्. तदनुवाच्य कल्याणोद्धवस्वामिनौ महता वेगेन तत्स्थलमागच्छताम्. तं चांदरावं पृष्ट्वा तद्दर्शिते स्थाने कल्याणस्वामिनः प्रथमतः श्रीसद्गुरुशोधपरायणा ममज्जुः. अपश्यंश्चाधस्ताद्बद्धपद्मासनान् समाधिमग्नान् श्रीसमर्थान्. तदानीमेव ते कल्याणस्वामिनः श्रीसमर्थान् स्कंधेनोद्वहन्त उपरिष्टादागच्छन्. श्रीसमर्थाश्च कल्याणस्वामिनां भक्तिं प्रेक्ष्य सन्तुष्टा अभवन्. अन्ये च शिष्यसमूहाः श्रीसमर्थानां समाधिसामर्थ्यं वीक्ष्य व्यस्मयन्त.

एकदा जयरामस्वामिनः श्रीसमर्थैः समं स्वगुरोः पुण्यदिनोत्सवार्थं वडगांवग्राममयुः. तदानीं रंगनाथस्वामिनो भागानगर आसन्. तत्र च स्नानकाले ब्राह्मणमुखादद्य पौर्णमासीति श्रुत्वा संजातजयरामस्वामिगुरुपुण्यदिनस्मरणास्तथैवोत्थायाश्वमारुह्य वडगांवग्राममुद्दिश्य निर्ययुः. श्रीजयरामस्वामिनस्तु रंगनाथस्वामिनोऽनागतान् प्रेक्ष्य चिंतातुराः श्रीसमर्थान् प्रत्यवदन्—अद्यापि रंगनाथस्वामिनो नागता इति. श्रीसमर्थाश्च 'आगमिष्यत्येव रंगनाथः, स च गुरुसेवाविमुखो न कदापि भविष्यति. सर्वे शिष्या अन्ये च जना भुञ्जन्तां. वयं च तं गृहीत्वैव भोक्ष्यामह' इति जगदुः.

रंगनाथस्वामिनस्तु महता जवेन वटग्राममागच्छन्तो मार्गे चौरैराक्रान्ता अचिरादेव तान् स्वतेजसा निर्जित्य वटग्राममाययुः. श्रीसमर्थाश्च दूरादेव ह्रेषारवं निशम्य 'एष रंगनाथः समागत' इत्यवोचन्. ततश्च सर्वेऽपि सानन्दं स्नातभुक्ता हरिकीर्तनश्रवणे निमग्ना अभवन्.

प्रभाते च गोपालस्वामी नाम श्रीसमर्थशिष्यः 'रात्रौ मया श्रीरंगनाथस्वामिनामश्वो मंदुरां नीतो बद्धश्च. परन्तु तदानीमेव स भूमौ पादान् प्रसार्य पंचत्वं गतः. रात्रावेवैष वृत्तान्तः कथनीयः, परन्तु हरिकीर्तनानन्दे विघ्नो माभूदिति न कथित इति न्यवेदयत्. अथ श्रीसमर्थाः सर्वैर्जनैः सममश्वशालां गता भूमौ पतितं मृतं वाजिनमपश्यन्. ते तु तत्समीपं गत्वा—'उत्तिष्ठ अश्वपते ? नायं ते मरणकालः. किंत्वद्यापि त्वयाऽयं रंगनाथः सेवनीय' इत्युक्त्वा स्वहस्तकमलेन तदंगमस्पृशन्. तत्क्षण एव सोऽश्वः सुप्तप्रबुद्ध इव स्फुरदोष्ठपटल उत्तस्थौ.

एकदा श्रीसमर्थाश्चाफळमठे निवसन्तीति श्रुत्वा श्रीशिवराजस्त-द्दर्शनार्थमाजगाम. तदानीं च श्रीसमर्थाः शीतज्वरपीडिता अन्तर्गृहेऽस्वपन्. शिवराजो दर्शनार्थमागत इति निवेदिता उत्थाय स्थिताः स्वस्योत्तरीयं वस्त्रं च देहादवतार्यास्थापयन्. शिवराजस्तु कृतप्रणिपातः पृष्टकुशलः कम्पमानं तद्वस्त्रं वीक्ष्य जातविस्मयो बहिरागत्य कल्याणस्वामिनमपृच्छत्. ते च—श्रीसमर्थाः शीतज्वरपीडिता युष्मदागमनं श्रुत्वैवोत्थाय स्थिताः. संलापव्यत्ययो माभूदिति श्रीसमर्थैस्तच्छीतं प्रावरणे स्थापितमिति अगादिषुः. तेषां चेदं वचनमाकर्ण्य परं विस्मितः शिवराजः श्रीसमर्थान् व्यज्ञापयत्—सद्गुरो ? यदि शीतं स्वशरीरादवतार्य स्वप्रावरणे स्थापयितुं यूयं प्रभवथ तदा किमिति तद्देहादेव न निराकुरुथ ? इति. श्रीसमर्थास्तु तदीयं भाषणं निशम्य हसन्तः—तात ? शिवराज ? देहभोगोऽयं, अवश्यं भोक्तव्यः तत्र न कस्यापि प्रभुत्वमित्यवदन्.

एकदा शिवनृपतिः समं स्वमंत्रिभिश्चाफळमठमागत्य श्रीसमर्थैः समं वार्तालापं कुर्वन्नतिष्ठत्. अत्रान्तरेऽकस्मादेव श्रीसमर्थाः त्रिर्नेत्रे निमील्योदघाटयन्. प्रावरणवस्त्रं च क्लिन्नं. तद्वीक्ष्य शिवराजो जातविस्मयः श्रीसमर्थान्किमिदमित्यपृच्छत्. ते च तं शिवराजं समीप आहूय प्रावरणवस्त्रं निपीड्य जलस्य बिन्दूंस्तस्य हस्तेऽक्षिपन्. नरपतिस्तु तान्निपीयं सामुद्रमिदमुदकमिति बभाण. पप्रच्छ च तस्य कारणं. श्रीसमर्थाश्चेतः पंचदशे दिने ज्ञास्यसीत्येवावदन्.

अथ तस्मिन्नेव दिने श्रीशिवराजे समर्थान् द्रष्टुमागते राजापुरनगरे निवसन् महानिभ्यो 'मुंजे'उपनामकः कोऽपि समुद्रव्यवहारी वणिक् सकुटुंबमागत्य श्रीसमर्थचरणान् प्रणनाम. अव-

दश्व—अहं च नौकाभिः समुद्रव्यवहारं करोमि. अतीते पक्षेऽहं मदीयां नौकां गृहीत्वाऽऽगच्छन्नकस्माद्वात्यया समाक्रान्ता सा नौका समुद्रे निमंक्तुं प्रारभत. कृत्स्नमपि मदीयं कुटुम्बं तस्यामेव नौकायामासीत्. अहं च किंकर्तव्यतामूढः केवलं कर्णाकर्णिकया श्रुतश्रीसमर्थचरणकीर्तिस्तानेव मनसा शरणमगच्छम्. समकल्पयं च—यद्यहमस्मात्संकटान्मोक्ष्यामि तदा श्रीसमर्थचरणारविन्दयोर्दर्शनं गृहीत्वा ब्राह्मणभोजनं करिष्यामि इति. संकल्पानन्तरमेवेयं मूर्तिः प्रकटीभूय मदीयां नौकां हस्तेन गृहीत्वा समुद्रतीरं प्रापयत्. अतोऽहमत्र संकल्पसफलीकरणाय प्राप्तः.

तदिदं वृत्तं निशम्य सर्वेऽपि शिवराजप्रभृतयः शिष्यगणाः श्रीसमर्थानामुपासनासामर्थ्येन विस्मिता बभूवुः.

वाचकाः ? नास्ति भगवतः कृत्यानामिव भगवद्भक्तानां लोकोत्तरकृत्यानामियत्ता. प्रतिदिनं च ये भगवद्भक्ता यद्यत्कुर्वन्ति तत्तत्सर्वमलौकिकमेवेति सर्वेषामेव दैनिकोऽनुभवः. ये त्वस्मिन्विषये संदिहते तेषां संदेहं ब्रह्माऽपि दूरीकर्तुं न प्रभवेत्. साधवश्च भक्त्या वशीकृतचैतन्यशक्तयस्तत एव ते धर्मोद्धाररूपमलौकिकं कार्यं कर्तुं प्रभवन्ति. कस्य वा साधारणमानवस्यास्ति शक्तिः—सार्वभौमशिवराजकृतमाह्वानं निराकृत्य परमानन्देन दारिद्र्यस्वीकारे. यदि च वयं कपर्दिकार्थमपि कलहायमाना इदं वृत्तं सत्यं मन्यामहे तदा मुष्टिमात्रचणकैः श्रीतुकारामसाधुवरैः सर्वे शिवराजसेनाश्वाः संतर्पिता इत्यत्र कथं संशय इति न जानीमहे. तस्मादिदमशक्यमिदं शक्यमिति स्वबुद्धिसामर्थ्यमनुसृत्योच्यते. अन्यथाऽस्माकं भारतवासिनां यदशक्यं समुद्रे पंचदशदिनपर्यन्तं मत्स्यवद्यथे-

च्छं वर्तनं तत्साम्प्रतं महायुद्धे सुशकमिति सर्वेऽपि जानन्तः कथं प्रामाणिकतां भजेरन्.' ततश्च ये मया तत्तत्साधूनां विशेषतश्च श्रीसमर्थानामुपासनासामर्थ्यमूलकाश्चमत्काराः प्रदर्शितास्ते केवलं न कविकल्पनारूपाः किंतु यथार्था एवेति नास्ति संदेहः.

वाचकाः ? एतासां कथानां कथनेऽस्ति ममाऽभिप्रायान्तरमपि. यदा हि लोकोद्धारः कर्तव्यस्तदा प्रथमत एव लोकोद्धारचिकीर्षुणा मानवेनोपासनादिभिरुपायैः स्वसामर्थ्यं वर्धनीयं. सामर्थ्यं विनाऽनुष्ठितं कार्यं सम्यक् न जायत इति लोक एव निवेदयति. यद्यप्यन्येषु कार्येषु सन्ति नानाविधा उपायाः, परन्तु लोकोद्धाररूपेऽलौकिके कर्मणि परमात्मोपासनाया अलौकिकोपायरूपाया ऋते नान्य उपायः. लोकोद्धारश्च भगवत एव कर्म.

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं॥

इति गीतावचनात्. स च सर्वशक्तिमान् परमात्मा तत्कार्यं स्वभक्तद्वारा कारयति राजेव स्वभृत्यैः. तस्माद्विविधदुःखदग्धैर्जनैर्भगवतः साहाय्यलाभाय प्रथममीश्वराराधना कर्तव्या. तदर्थं च प्रसिद्धा भगवद्भक्ता गुरुवः करणीया इति युक्तं.

वाचकाः ? एवंविधैर्बहुभिश्चमत्कारैर्विस्मिताः प्रायः सर्व एव जनाः प्रतिदिनं शिष्या बभूवुः. श्रीसमर्थाश्च चिकीर्षिते लोकोद्धारकर्मणि शिष्यसंप्रदायस्यावश्यकतां पश्यन्तः शरणागताननुगृह्य शिष्यसंप्रदायमारेभिरे.





# ( ९ ) शिष्यसम्प्रदायः

श्रीसमर्थानां यः खलु शिष्यवर्गस्तत्र सर्वजातीयानां समावेश आसीत्. तत्रेमे विभागाः—

१ पुरुषशिष्यवर्गः.

२ स्त्रीशिष्यवर्गः.

३ परकीयशिष्यवर्गश्च.

वाचकाः ! श्रीसमर्थानामुपासनासामर्थ्येन विस्मिता जनास्तद्नुग्रहग्रहणार्थं प्रतिदिनं चाफळमठमागच्छन्. श्रीसमर्थाश्च सर्वत्र तीर्थयात्रामिषेण पर्यटन्. स्थाने स्थाने प्रमुखान् देशमुखांस्तेऽन्वगृण्हन्. विशेषतश्च महाराष्ट्रे प्रायः सर्वेष्वेव स्थानेषु श्रीसमर्था मठान् स्थापयित्वा शिष्यसम्प्रदायमारभन्त. यद्यपि श्रीसमर्थानां शिष्या बहव आसंस्तथापि तेषु ये मुख्यास्तेषां नामानि प्रदर्श्य तेषामेव मध्ये केषांचित् प्रसिद्धानि चरितानि लिखामि.

श्रीसमर्थानां शिष्यसमुदाये कल्याणस्वामिन एव मुख्याः श्रीसमर्थप्रतिबिंबरूपा आसन्. तेषां च चरितमित्थम्—

एकदा श्रीसमर्थाः शिष्यैः समं करवीरक्षेत्रं गताः. तत्र पाराजीपन्तनामा महासज्जनः प्रान्ताध्यक्ष आसीत्. स तु श्रीसमर्थानां वैराग्यं वीक्ष्य प्रेममयं हरिकीर्तनं च निशम्य तदनुग्रहं जग्राह. तस्य गृहे अंबाजीनामा कश्चन तीव्रमतिर्बालक आसीत्. श्रीसमर्थाश्च तदीयं वर्तनं वीक्ष्य तमयाचन्. पाराजीपन्तस्तु 'नायं मम

पुत्रः किंतु मम भगिन्याः. मम भगिनी 'रखमादेवी' निराश्रया द्वाभ्यां पुत्राभ्यां सहात्रैव तिष्ठति. यदि साऽनुमिनुयात्तदाऽमुमं-बाजिं युष्मभ्यं दास्यामीत्यवोचत्.

अथ मध्याह्नकाले भोजनादिविधिषु संवृत्तेषु श्रीसमर्थाः साध्वीं रखमादेवीं पुत्रस्य दानायापृच्छन्. सा तु श्रीसमर्थानामलौकिकेन तेजसा जातविश्रंभा स्वयं द्वाभ्यां पुत्राभ्यां सह श्रीसमर्थसंप्रदाया-नुयायिनी बभूव. ततश्चैकदा श्रीसमर्थाः सह तेन पुत्रेण मसुरी-ग्राममागच्छन्. तत्र ग्रामाध्यक्षाम्बया श्रीरामोत्सवः प्रारब्धः. त-स्मिन्नुत्सवे श्रीदेवप्रतिमा शिबिकायां स्थापयित्वा सर्वत्र संचारणी-येति नियम आसीत्. तादृशं नियममनुसृत्य यदा शिबिका नि-र्गता तदा मार्गस्थवापीतीरवर्तिनः सहकारतरोः शाखा शिबिकाप्र-चारमरुणत्. श्रीसमर्थाश्च तदानीमेव तस्याः शाखायाश्छेदाया-म्बाजिमवदन्. सोऽपि तस्मिन्नेव क्षणे कुठारं गृहीत्वा तां छिन्दन् 'अरे ? त्वं पुरतः स्थित्वा पश्चाच्छिन्धि' इति सलीलं श्रीसमर्थैरुक्तः 'गुर्वाज्ञा प्रमाणं' इत्युक्त्वा तथैव कुर्वन्नचिरादेव शाखया समं तस्यामेव वाप्यां पपात. श्रीसमर्थाश्च देवसन्निधावुपाविशन्. सर्वे च शिष्याः संवृत्तं वृत्तं निवेदयितुमशक्तास्तूष्णीमतिष्ठन्. ततश्च सर्वेऽपि शिष्या मिलिताः—'अम्बाजिस्तु वाप्यां पतितो मृतः. इदानीं तस्य देहस्य साफल्यं विधातुमाज्ञां याचामः. इति विज्ञा-पयामासुः. श्रीसमर्थाश्च तेषामिमां विज्ञप्तिं निशम्य सहासं 'किं मृतोऽम्बाजिः ?' इति वदन्तो वापीतीरमागत्य—'अम्बाजि ? इत आगच्छ' इत्युच्चैः समाह्वयन्. तत्क्षण एवाम्बाजिः श्रीसमर्थानां पुरस्तान्मुकुलितहस्तः तस्थौ. तं वीक्ष्य स्मेरवदनाः श्रीसमर्था अ-

म्बाजिमवदन्—अंबाजि ? कथमस्ति ? इति. 'गुरुकृपया कल्याणमस्ति' इत्युत्तरयन्तं तमंबाजिं श्रीसमर्थाः कल्याणनाम्नैव व्यपादिशन्.

वाचकाः ? त इम एव कल्याणस्वामिनः श्रीसमर्थानां परं प्रेमास्पदं. एतेषां च गुरुसेवाप्रकारान् क्रमेणाग्रिमप्रकरणे वर्णयिष्यामः.

यद्यपि श्रीसमर्थानां शिष्यमंडलं सुमहदासीत्. महाराष्ट्रे तु प्रतिग्रामं काषायवस्त्रधारिणः श्रीरामदाससंप्रदायानुयायिनो व्यराजन्. नापि ब्राह्मणा एव तेषां शिष्याः किंत्वन्यजातीया अपि. तथापि तदानींतनेषु श्रीसमर्थशिष्येषु पुरोलिखितानामेव प्राधान्यमासीदिति प्रतीयते. ते च यथा.

[1]उद्धवगोस्वामी, [2]कल्याणस्वामी, [3]शहापूरकरः, [4]भिकाजीगोस्वामी, [5]त्रिंबकगोस्वामी, [6]अप्पागोस्वामी, [7]देवदासः, [8]दत्तात्रयगोस्वामी, [9]महादेवगोस्वामी, [10]रोकडारामः, [11]मुसलरामः, [12]भोलारामः, [13]मौनीगोस्वामी, [14]हनूमान्गोस्वामी, [15]रंगोबागोस्वामी, [16]दिनकरभट्टः, [17]अनन्तभट्टः, [18]महाबलेश्वरकरः, [19]बाजीपन्त इत्यादयः. अस्तु. वाचकाः ? यद्यपि एतेषां मध्ये केषांचिच्चरितानि समुपलभ्यन्ते तस्मादत्र तेषां सारांशकथनं प्राप्तमेव तथापि संक्षेपत एतेषां कथा अग्रे वर्णयितुमिष्टा इति पुनरुक्तभिया विरम्यते.

## ( स्त्रीशिष्यवर्गः )

सज्जनाः ? यस्मिन् कार्ये प्रवृत्तानां पुरुषाणां साहाय्ययित्र्यः स्त्रियो भवन्ति तत्कार्यमवश्यं सिध्यत्येव. सामान्यतो जगतीतले संख्यया पुरुषसमा हि स्त्रीजातिरुपलभ्यते. तत्रापि गृहिणीतया सर्वव्यवहारकर्तृत्वं तस्या एव. पुरुषजातिस्तु केवलं द्रव्या-

जेनादि कुर्वन्ती सांख्यकल्पितपुरुषवत्संसारे सर्वव्यवहारसाक्षिण्येव न तत्कर्त्री. तेन व्यवहारकार्येषु स्त्रीणामेव प्राधान्यं.

किंच—व्यवहारार्थं साक्षादेव नानाजातिभिः समं यथा पुरुषजातिः संबध्यत एवं स्त्रीजातिर्न. तेन परकीयसंसर्गदोषदूषितान्तःकरणा पुरुषजातिः प्रायः स्वधर्माचारान्मुंचति परकीयाचारान् गृह्णाति. नैवं स्त्रीजातिः. तेनानुकूलायां स्त्रीजातौ स्वधर्मनिष्ठाऽपि तस्मिन् कार्येऽनुकूला भवति. अस्तु.

श्रीसमर्थाश्च यस्मिन् समये स्वदेशोद्धारार्थं प्रायतन्त तदा प्रायः कृत्स्नाऽपि पुरुषजातिर्यवनसंसर्गदूषितैवासीत्. तद्वीक्ष्य दुःखाकुलाः श्रीसमर्थाः पुरुषजातितस्तरुणानेव स्वशिष्यांश्चक्रुः स्त्रीजातिं च परमपवित्रां सनातनधर्मानुचारिणीं वीक्ष्य ततोऽपि काश्चित् स्त्रीः स्वमतानुवर्तिनीरकुर्वन्. तासां मध्ये कासांचिच्चरितानि परमादरेणाहं निरूपयामि.

श्रीसमर्थानां स्त्रीशिष्यवर्गे त्रीणि स्त्रीशिष्यरत्नानि सतीदेवी, वेणुदेवी, अक्कादेवीनामान्यासन्.

तत्र सतीदेवी खलु शहापुरग्रामाध्यक्षस्य पत्नी. इयं हि परमसाध्वी पतिव्रताऽसीत्. एकदा श्रीसमर्थाः शहापुरं गता भिक्षार्थं ग्रामाध्यक्षस्य गृहमगच्छन्. तस्मिन्दिने तस्य ग्रामाध्यक्षस्य गृहे सर्वेऽपि जनाश्चिंतातुरा आसन्. श्रीसमर्थास्तु तत्कारणं जिज्ञासमाना मुख्यस्य ग्रामाध्यक्षस्य यवनराजराजधानींगतस्य चिरं वेलायमानत्वमजानन्. तस्मिन्नेव क्षणे श्रीसमर्थास्तां ग्रामाध्यक्षपत्नीं सतीदेवीमवदन्—अहमितो गत्वैकादशेऽहनि भवत्याः पतिं मोचयित्वाऽऽनेष्यामीति.

अथ प्रतिज्ञानुरूपं स ग्रामाध्यक्ष एकादशेऽहनि गृहमागतः स्वजनेन पृष्टो दासोपन्तं स्वागमनकारणमब्रवीत्. ततश्च सर्वस्मिन्नपि बान्धवगणे कोऽयं दासोपन्तः स्यादिति चिन्तातुरे सति सा साध्वी सतीदेवी श्रीसमर्थानेव स्वपतिमोचनकारणमवागच्छत्. ततस्ते सर्वेऽपि ग्रामाध्यक्षप्रभृतयः श्रीसमर्थदर्शनं विनाऽन्नग्रहणे निरिच्छास्त्रिदिनपर्यन्तमुपावसन्.

श्रीसमर्थाश्च तेषां भक्तिमन्तर्दृष्ट्या परीक्ष्य चतुर्थदिवसे तस्यैव ग्रामाध्यक्षस्य गृहमागच्छन्, अघोषयंश्च 'जयजयरघुवीरसमर्थ' इति. श्रुत्वा तं घोषं श्रीसमर्थानामागमनमुत्प्रेक्षमाणा सा सतीदेवी त्वरया समागत्य श्रीसमर्थानां चरणकमले ववन्दे. अनन्तरं च स ग्रामाध्यक्षः सह पितृभ्यां तच्चरणयोर्लीनोऽभवत् अस्तौच्च—नाथ ! युष्माभिरेव विजापुरराजधानीमागत्यायं दासो मोचित इति. श्रीसमर्थाश्च सर्वानप्यनुगृह्य तत्रैवाभुंजत.

अथ तद्दिनमारभ्य सा सतीदेवी श्रीसमर्थचरणारविन्ददर्शनं विनाऽन्नाग्रहणाय शपथं चक्रे. एकदा श्रीसमर्थास्तस्या गृहमेकादशदिनपर्यन्तं न जग्मुः. सा च दृढव्रता तावन्ति दिनानि नाभुंक्त. द्वादशेऽहन्यपि कृतोपवासा सा सतीदेवी गृहान्निर्गत्य श्रीसमर्थान शोधयितुमरण्यादरण्यान्तरं पर्यटन्ती कस्यापि पर्वतस्यात्युन्नते शिखरे निवसतः क्रूरैर्व्याघ्रादिभिः श्वापदैः परिवेष्टितान् श्रीसमर्थानद्राक्षीत्. तान् वीक्ष्य संजातानन्दा सा सतीदेवी व्याघ्रादीन् पशूनगणयन्ती सहसा श्रीसमर्थानां समीपं गत्वा तदीयचरणकमले स्वहस्तसरोजाभ्यामगृह्णात्. स्मेरवदनाः कृपार्द्रनयनाः श्रीसमर्थाः सतीदेवीं पाकनिष्पत्त्यर्थमवदन्. उपासनासामर्थ्यसंपादितैस्तण्डुला-

दिभिः पाकसाधनैः पाकं विधाय नैवेद्यसमर्पणाय विज्ञापयन्तीं सतीदेवीं—'त्वं पृष्टमितःकृत्वा तिष्ठ' इत्यादिश्य श्रीरामचन्द्राय नैवेद्यं समर्प्य प्रसादं जगृहुः. अत्रान्तरे 'श्रीसमर्थाः कथं भुंजत' इति दर्शनार्थं संजातकुतूहला सा सतीदेवी किंचित्पर्यावर्त्य पश्यन्ती घोररूपं हनूमन्तं प्रेक्ष्य मुमूर्च्छे.

अथ समाप्तभोजनाः श्रीसमर्थास्तां सतीदेवीं संज्ञां लंभयित्वा श्रीभगवतो मारुतेर्दर्शनेन प्रशंसन्तः शहापुरमागत्य तदीये भवने हनूमन्तं स्थापयित्वा तस्य तीर्थग्रहणेनैव स्वजन्मनः साफल्यमवगन्तुं तामादिशन्. साऽपि तदिदं समर्थवचनं शिरसा कुर्वन्ती हनूमन्तं चिरं परिचरन्ती चिरमुवास.

वाचकाः ? कियती खलु श्रद्धा सतीदेव्याः श्रीसमर्थेषु ? केचनेमां कपोलकल्पनां वदन्तु. केचनांधश्रद्धां. परन्तु एतादृशान्युदाहरणानि संभवन्तीत्यत्र न संशयः. अस्तु.

एवमेव वेणुदेव्यपि श्रीसमर्थानां परमप्रिया शिष्याऽभवत्. यथा हि पुरुषशिष्येषु कल्याणस्वामिनः श्रीसमर्थानां प्रतिबिम्बं एवमेव स्त्रीशिष्येषु वेणुरासीत्. सज्जनाः ? इयं खलु मिरजग्रामवासिनां देशपांडेउपनामकानां देशाध्यक्षाणां कन्या. बाल्य एव प्राप्तवैधव्या केवलमहर्निशं रामचन्द्रसेवापराऽभूत्. सा च सर्वत्र प्रसरन्तीं श्रीसमर्थानां कीर्तिं निशम्य शरणमागता तैश्चानुगृहीता. यदा च श्रीसमर्थैर्मिरजग्रामे मठः स्थापितस्तदा शिष्यत्वेनेमामेव ते तत्राऽस्थापयन्. प्रतिवर्षं च रामनवमीमहोत्सवार्थं चाफळमठमागत्य श्रीरघुपतिसेवा कर्तव्येति वेणुदेव्या नियम आसीत्. श्रीसमर्था अपि भूयोभूयस्तत्त्वोपदेशेन वेणुदेवीमन्वगृह्णन्.

एकदा श्रीरामनवमीमहोत्सवार्थं चाफळमठमागता वेणुः. तत्र तदानीमक्कानाम्नी श्रीसमर्थानामन्याऽपि शिष्याऽसीत्. सा च वेणुं समागतां वीक्ष्य भिक्षार्थमन्यत्र पर्यटितुकामा तां मठे स्थापयित्वा रामनवमीमहोत्सवोपयोगि साहित्यं विधातुमाज्ञप्य च जगाम. वेणुरपि यथाशक्ति तत्साहित्यं कुर्वन्ती हिमज्वरेण तथा पीडिता यथा पदात्पदमपि चलितुं न शशाक. इतश्च महान् शीतज्वरः, इतश्च रामनवमीमहोत्सवः समागतकल्प एव. मठे तु नास्ति— ब्राह्मणभोजनसामग्री. वेणुदेवी श्रीसमर्थाः किं वदिष्यन्तीत्यालोच्य शोकाकुला स्वात्मानं स्तंभे बन्धार्थं शिष्यानादिशत्.

अथ च तैः शिष्यैः स्तंभेऽतिदृढं बद्धा सा वेणुदेवी भगवन्तं सीतानाथं स्वयं विरचितैः पद्यैस्तथाऽस्तौद्यथा करुणामयो रघुपति-र्द्रुतान्तःकरणः स्वकण्ठस्थां मालां तस्याः कण्ठे निक्षिप्याश्रूणि विससर्ज.

वाचकाः ? नैतन्मिथ्याभवितुमर्हति. यतो भक्तवराणां राम-दासाऽन्तेवासिनां हृदयकमलेष्यवद्यापि एतज्जागर्ति. त एवैतत्सर्वं कपोलकल्पितमिति वदन्ति, ये न जानन्ति भक्तिः कः पदार्थ इति. ते च कथं भगवद्भक्तानामलौकिकसामर्थ्ये तथा तत्कृतेषु कर्मसु वि-श्वस्युः. सज्जनाः ? न खलु केवलमीश्वरविषये वा भक्तिविषये वा तत्त्वज्ञानविषये वेदृशी रीतिः किंतु सर्वत्रैव. यः कोऽप्यशक्तं प्रति वदेत्—राममूर्तिर्नाम बलाढ्यो मल्लो महान्तं पाषाणमुरसि निधाय तदुपरि द्वितीयं पाषाणं चूर्णीकरोतीति तदा सोऽवश्यमेव वदेत् 'अशक्यमिदं' ! इदं केवलं कपोलकल्पितमिति. वाचकाः ?

क्रिमत्र कारणमन्यदृतेऽशक्तेः ! तस्मादशक्यमिदं सर्वैरपि जनैः कस्याऽपि वस्तुनो निःसंदिग्धत्वेन स्वीकार इति. अस्तु.

एवंरीत्या सा वेणुदेवी मिरजनामके ग्रामे निवसन्ती रामनवमीमहोत्सवार्थं चाफळमठमागत्य श्रीसमर्थचरणदर्शनानन्दं समनुभवन्ती षष्टिवर्षाणि जिजीव. अथ वार्धक्यपीडिता चाफळमागन्तुमक्षमा महता कष्टेन चाफळमठं समागत्य श्रीसमर्थचरणान् 'मातृगृहगमनायाज्ञा देया' इति विज्ञापयामास.

श्रीसमर्थास्तु तदीयमभिप्रायं जानन्तः 'अस्त्यवकाशः, गच्छ मिरजमठं' इत्यगदन्. एवं द्वे वर्षे व्यतीते. भूयोभूयः सा वेणुदेवी श्रीसमर्थांस्तथा व्यज्ञापयत्. तेऽपि तथैवोत्तरमदुः.

एवं व्यतीते काले एकदा मुखप्रक्षालनार्थं बहिःस्थितान् श्रीसमर्थान् सा वेणुदेवी तथा पुनरपि विज्ञापयामास. तदानीं च श्रीसमर्थाः—अद्य गन्तव्यं. सम्यग्रीत्या पाकनिष्पत्तिं विधाय श्रीरघुपतिः संतर्पणीय इति जगदुः. तामिमाममृतमयीं वाणीं निशम्य सन्तुष्टा सा वेणुः पाकागारं गत्वा सर्वं पाकं सम्यगकरोत्.

श्रीसमर्थाश्च सर्वान् शिष्यान्—'अद्य वेणुर्मातृगृहं गमिष्यति तद्रघुपतिः सम्यक् पूजनीयः सर्वैश्चात्रैव संनिधेयमित्यादिदिशुः. अथ रघुपतिं पूजयित्वा श्रीसमर्थाः स्वपात्रसंमुखं द्वितीयं पात्रं निधाय तत्र वेणुमुपवेशयित्वा महताऽनन्देन कृतभोजना हरिकीर्तनं विधातुं वेणुदेवीमवदन्. वेणुदेवी परमभगवद्भक्ताऽद्वितीयभक्तिभावेन तस्मिन्दिने तथा हरिकीर्तनमकरोद्येन सर्वेऽपि श्रोतृजना विस्मृतदेहभावा ब्रह्मानन्देऽरमन्त. अथ समाप्ते हरिकीर्तने श्रीरघुपति-

प्रसादं गृहीत्वा तदीयां मालां कण्ठेन धारयन्ती संचारिणी भगवद्भक्तिरिव श्रीसमर्थचरणानभिवंद्य 'इदानीमाज्ञा देया मातृगृहगमनाय' इति सानन्दं विज्ञापयास.

श्रीसमर्था अपि समाप्तायामेव तद्विज्ञापनायां 'तथास्तु गच्छ मातृगृहं' इति जगदुः. तान्येतान्यक्षराणि कर्णेकृत्वा सा वेणुदेवी स्वहस्तधृतयोः श्रीसमर्थचरणकमलयोः स्थापितमस्तका 'रामशब्दमुच्चार्य' प्राणान् व्यजहात्. जडीभूतो वेणुदेव्याश्च देहस्तस्मिन क्षणे भूतले निपपात.

वाचकाः ? किमिदं नालौकिकं ? किमिदं नाश्चर्यास्पदं ? किमिदं नादरास्पदं ? किमिदं न भक्तिसर्वस्वं ? सज्जनाः ? शृणुमस्तावद्वयं गीतायां "वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि" इति श्लोकेन देहस्य वासस उपमां, परन्तु भगवत्या वेणुदेव्या सा प्रत्यक्षं दर्शिता. प्रियमहाभागाः ? अहं तु वदामि धन्या सा वेणुदेवी, धन्यास्ते श्रीसमर्थचरणाः, धन्यः स जनो येनेयं कथा प्रत्यक्षीकृता. वयं चैतादृशीं हीनामवस्थां प्राप्ता यत्स्वयं तथाऽऽचरितुमप्रभवन्तः कस्याऽपि तादृशमाचरणं निशम्य, दृष्ट्वाऽपि वा 'अशक्यमेतत्' इति ब्रूमः. एषैव मानवजातेरधोगतिर्नाम. अस्तु.

अथ तं च वेणुदेवीदेहं श्रीसमर्थाः स्वयमेव तुलसीकाष्ठैरदहन्. तस्मिन् स्थले वृन्दावनमकार्षुः. अचिरादेव च तत्र सुगंधिपुष्पसंकुलश्चंपकवृक्षः प्रादुरभूत्. यस्य च पुष्पाणि श्रीसमर्थाः स्वयमेव रघुपतिपूजार्थमुपयुयुजुः.

एवमेवाक्कानाम्न्यपि अपरा स्त्री श्रीसमर्थानां शिष्याऽऽसीत्. वाचकाः ! एवंरीत्या श्रीसमर्थानां पुरुषशिष्यशाखा स्त्रीशिष्यशाखा च निरूपिता. साम्प्रतमन्यजातीयाः शिष्या निरूप्यन्ते.

सार्वजनीनमेतद्यत्केनाऽपि लोकोद्धारचिकीर्षुणा जनेन यद्यत्स-हायत्वेनापेक्ष्यते तत्सर्वं स्वीकर्तव्यमेवेति. श्रीसमर्थचरणैर्लोकानां विश्वाससंपादनाय स्थाने स्थाने मठाश्च स्थापिताः. तत्रापि स्वोपमाः शिष्याश्च नियुक्ताः तेन द्वारेण ते सर्वत्र भक्तिप्रसारमकुर्वन्. तेन चेतरजनवत्सज्जना यवना अपि तान् शरणमागच्छन्. श्रीसमर्था अपि तेषामप्युपयोगित्वं पश्यन्तस्तानप्यन्वगृह्णन्.

किंच—तत्वज्ञाननिर्धूताज्ञानाधीनकामक्रोधाः सज्जनाः कदापि शरणागतेषु क्षुद्रजनगम्यं स्वकीयपरकीयभेदं न शंकन्ते. नहि पयोदः पिपासुषु जातिभेदं शंकते. नापि चन्द्रः स्वज्योत्स्नां चाण्डा-लवेश्मनः परिहरति. तमेनं सामान्यनियममनुसृत्यैव श्रीसमर्थाः परकीयानपि शिष्यानकुर्वन्.

वाचकाः ? उपासनासामर्थ्यप्रदर्शनप्रकरणे या मया श्रीसमर्था-नामलौकिक्यः कथा कथिताः, तत्र मिरजग्रामाध्यक्षस्य दिलेल-खानस्य तथा इन्दूरग्रामाध्यक्षस्य पाटलग्रामाध्यक्षस्य च वृत्तं लिखि-तमेव. तत एव च ते सर्वेऽपि श्रीसमर्थानां शिष्या आसन्निति भवद्भिर्विदितमेव स्यात्.

एकदा चाफळमठे श्रीरघुनाथस्य भूषणान्यपहर्तुं चौरा आग-च्छन्. तानागतान् वीक्ष्य सर्वेऽपि कल्याणस्वामिप्रभृतयः शिष्य-गणास्तांस्ताडयितुं निर्वासयितुं चोद्यताः. तांश्चोद्यतान् श्रीस-

मर्थाः सहसा ‘यथा यूयं रामदेवस्य प्रियास्तथैव चौरा अपि, यथैव यूयं रामचन्द्रमुपास्य तत्प्रसादं भक्षयथ तथैवेमे चौरा अपि रामचन्द्रदत्तमलंकारादिकं गृह्णन्तु. तत्प्रतिबंधे च यूयं के’ इति निगद्य निषिषिधुः. श्रुत्वा चेमं नियोगं विस्मितास्ते सर्वे शिष्या बहुधा रघुपतिभूषणहरणप्रतिबन्धार्थं व्यजिज्ञपन्. ततः श्रीसमर्थाः ‘चौरास्ताडनं विना निग्रहणीया’ इति कथयामासुः. सर्वेऽपि शिष्यास्तं नियोगं शिरसा कुर्वन्तश्चौरानन्वधावन्. अचिरादेव भयेन लोभेन च धावतस्तांश्चौरान् पर्वतोपत्यकायामेवागृह्णन्. निष्कास्य च लेखां तांश्चौरान् कल्याणस्वामिनोऽवदन् ‘नैषा लेखा भवद्भिरतिक्रमणीया’ इति. ततश्च सर्वं वस्तुजातं गृहीत्वा चाफळमठमागच्छन्. चौरास्तु तस्या लेखाया महत्त्वमजानन्तो बलादेव तामत्यक्रामन्. तेन च ते प्रज्ञानेत्रा भूत्वा शुशुचुः. ‘श्रीसमर्थाश्च सर्वं वृत्तं कल्याणस्वामिनिवेदितं श्रुत्वा दयार्द्रास्तत्रैव समागच्छन्. वीक्ष्य च तांश्चौरान्नेत्रहीनान् कृपया स्वहस्तगतयाऽक्षमालया तेषां नेत्रस्थानान्यस्पृशन्. तदानीमेव ते पूर्ववत्सनयनाः श्रीसमर्थचरणयोरपतन्. ततश्च श्रीसमर्थास्तैः समं चाफळमठमागतास्तांश्चौरान् सम्यग्भोजयित्वा वस्त्राणि वितीर्य स्वस्वगृहगमनायादिशन्. तेऽपि चौराः सात्विकवृत्तयो गृहस्था भगवद्भक्तवराः शिष्या अभवन्.

वाचकाः ? उपरितननिरूपणेन भवद्भिर्ज्ञातमेव स्याद्यत् श्रीसमर्थचरणैः शिष्यविधाने महच्चातुर्यं कृतमिति. विशेषतश्चाग्रिमप्रकरणे शिष्यपरीक्षारीतिः श्रीसमर्थानां कथमासीदिति प्रत्यक्षीभविष्यति.

---



# (१०) (श्रीसमर्थचरणेषु शिष्याणां विश्वासः)

वाचकाः ? यो हि येन मार्गेण लोके लोकोत्तरं कार्यं चिकीर्षति तेन तस्य कार्यस्य साधनीभूता सामग्री सम्यक् संपादनीयेति सर्वसंमतं. यथाहि कश्चन नृपः स्वसमीपवर्तिनं राजानं यदा जेतुमिच्छति तदा स प्रथमं तस्य राज्ञो जये यत्कारणं युद्धसामग्र्यादि तत् सम्यगनुतिष्ठति. तत्राप्यादौ तत्साधनानि च. यथा च कश्चन पण्डितः कमप्येकं विषयमवलंब्य ग्रंथं विरचयितुमिच्छति तदा स प्रथमं तादृशग्रंथलेखनोपयोगिनीं सामग्रीमेकत्रीकरोति. तादृशसामग्रीसंपादने यान्यपि कारणानि तान्यपि संपादयति. यदि नैव कुर्यादथ ग्रंथं च लिखेत्तदा तस्य ग्रंथो जगत्युपहसनीयतां व्रजेत्. तस्मात्कस्यापि कार्यस्य प्रारंभात् प्रथमतस्तत्साधनीभूतायाः सामग्र्याः संपादने महान् यत्नः करणीय इति सिद्धम्. कारणीभूतायां च सामग्र्यां समीचीनायां कार्यं भवत्येव. प्रकृते च श्रीसमर्थचरणैरवनतलोकोद्धारः कर्तव्य इति मनीषया वा परमेश्वराज्ञया वा कार्यं समारब्धं, तत्र च मुख्यं कारणं लोकजागृतिः. सा चोपदेशं विना न भवतीति तदर्थं स्वोपमाः शिष्याः संपादनीयाः. ते चावनतेभ्य एव जनेभ्यः सकाशात्. एवंच यानि कुलानि यवनसंपर्केण नात्यन्तं दूषितानि तेभ्य एव कुलेभ्यः सरलमतींस्तरुणान् गृहीत्वा तान् सदाचरणरतान्विधाय त एव लोकोपदेशार्थं प्रेषणीया इति प्राप्तम्. सज्जनाः ? इदमेवातिदुष्करं कर्म. प्रायः सर्वेषु देशेषु भूयांसो जना आहारविहाररताः केवलं प्रत्यक्षमेव सुखादिकं

श्रद्दधाना न भविष्यत्कालसुखमपेक्ष्य वर्तमानकाले दुःखं सोढुं प्रयतन्ते. यया कयाऽपि रीत्या धनं संपाद्य पुत्रभार्यादिकं कुटुंबं पोषणीयं, इन्द्रियसुखं च सेवनीयमित्येव प्रायो बहूनां जनानां ध्येयमस्ति. विरलास्ते भविष्यत्काले जायमानं सुखमभिलक्ष्य साम्प्रतमगणितमपि दुःखमनुभवन्तो न व्यथन्ते. विरलतमाश्च ते ये स्वजन्म लोकहितार्थं क्षपयन्तः स्वेन्द्रियसुखानि भस्मसात्कुर्वन्तः स्वीया लौकिककामनाः स्वांगेष्वेव नाशयन्तोऽहर्निशं लोकोद्धारार्थं प्रयतन्ते.

यद्यपि बहुलदुःखदग्धस्य सांसारिकस्य जनस्य सुखीकरणे सन्त्यनेक उपायाः. तथाहि. क्षुधातुरस्य दारिद्र्यपीडितस्य धननाम्नापि विहीनस्य जनस्य सुखीकरणाय कृष्यादीनां वर्धनं, महतां यंत्रागाराणां (मील)स्थापनं, नूतनोद्यमानामुत्तेजनं, इति. परन्तु तेऽपि किंचित्स्वार्थमूलकतयाऽस्य निःस्वार्थकर्मणः षोडशीं कलामपि न स्पृशन्ति. यत्र च नास्ति लेशतोऽपि स्वार्थस्य सम्बन्धः, कार्यं च लोकोत्तरं शीलोद्धाररूपं, तच्च यैरनुष्ठितं श्रीसमर्थसदृशैः साधुवरैः कथमिव ते साधुवरा लोकादरास्पदं न भवेयुः ? सर्वमेतत्सत्यं. तथापि तादृशालौकिककार्यकरणाय जना अप्यतीव विरला लभ्यन्ते. प्रियवाचकाः ? नेदमन्यादृशं कर्म यत्स्वयमननुष्ठीय कथने परिणामः स्यात्. लोकोद्धारो नाम शीलोद्धारः. नहि शीलादन्यत्किमपि महत्. वाचकाः ? चौरैर्वा परकीयै राजभिर्लुण्ठिता अपि जनाः पुनरपि केनाप्युपायेन संपन्ना भविष्यन्ति परन्तु येषां शीलमेव तैरपहृतं न तेषामुद्धार आशाऽस्ति. यथाहि मृतो न केनाप्युपायेन जीवति, एवमेव भ्रष्टशीलो मनुष्यो न

पुनरपि मूलस्थितिं प्राप्नोति. श्रीसमर्थानां मुख्यमिदं कार्यमासीद्यत् परकीयराजसंसर्गात् प्रायः सर्व एव जनाः शीलभ्रष्टा आसंस्तेषु पुनः स्वशीलसंपादनाय जागृतिः करणीयेति. सा च जागृतिस्तेषां विश्वाससंपादनं विनाऽशक्येति प्रथमतो विश्वासः संपादनीयः. स च विश्वासो यथोपदेशाचरणेष्वेव भवति नतु विरुद्धाचरणेषु. नहि कोऽपि मद्यपानं निषेधन्तं स्वयं च मद्यपं विश्वसिति! नापि तद्वाक्यं प्रमाणीकरोति.

सज्जनाः? एवंरीत्या श्रीसमर्थैर्यत्कार्यं प्रारब्धं तत्कियद्दुष्करमिति भवद्भिरवगतमेव. तत्रापि तत्कार्यं कर्तव्यमिति मत्वा साहाय्यार्थमागच्छन्तः पुरुषा एव विरलाः. तत्राप्यागतेषु यथोपदेशाचरणा अतीव विरलाः. ततोऽपि तदाचरणं सत्यं नवेति गृहीतायां परीक्षायां समुत्तीर्णा अतीव विरलतमा एव.

एवं स्वकार्यमार्गेऽनेकबलवत्तरविघ्नैराक्रान्तेऽपि निर्भयाः श्रीसमर्थाः केवलं सर्वलोकपालयित्रीं परमात्मशक्तिमेव स्वसाहाय्ययित्रीं मन्यमानाः स्वकार्यकरणाय रात्रिंदिवं प्रायतन्त. अस्तु.

अथ पूर्वोक्तरीत्या श्रीसमर्थास्तपस्यया परमात्मशक्तिं वशीकृत्य तत्सामर्थ्येन लोकोत्तरचमत्कारांश्च विधाय लोकविश्वासं संपाद्य तस्मादेव लोकात् कांश्चन शरणागतान् शिष्यान्विधाय स्वकार्यसाधने प्रयेतिरे. ते च शिष्याः समीचीना नवेति परीक्ष्य लोके स्वारब्धकार्योपयोगिनं विश्वासमुत्पादयितुं . तान् प्रेषयितुमैच्छन्. युक्तमेवेदं. अन्यथा यद्ययोग्याः शिष्या लोके प्रचरेयुस्तदा समुत्पन्नमपि विश्वासं हत्वाऽविश्वासमेव ते संपादयेयुः. किं न पश्यथ साम्प्रतं श्रीसमर्थरामदासस्वामिभिः स्थापिते सम्प्रदाये प्रविष्टानां

कुकृत्यानि ! तन्मूलकं च जनानां तेष्वादराभावं विश्वासाभावं च. तस्मात् केनापि लोकोत्तरकार्यकारिणा मनुष्येण स्वस्मिन् स्वानुयायिषु च विद्यमानो जनानां विश्वासः सदैव महता प्रयत्नेन रक्षणीयः. वाचकाः ? एतदर्थमेव श्रीसमर्थाः स्वशिष्यान् पुनः पुनः परीक्षांचक्रिरेः. तेऽपि श्रीसमर्थेषु दृढं विश्वस्तास्तस्यां तस्यां परीक्षायामुत्तीर्णा एवाभवन्. तदिदं वृत्तं मनोहारि बोधप्रदं चेति संक्षेपेण निरूपयामि.

श्रीसमर्थानां यशोनिकरे सर्वत्र प्रसृते बहवः शिष्याः प्रफुल्लं वृक्षं भृंगा इव चाफळमठमाजग्मुः. तत्र च शिवराजवितीर्णधान्यराशिभिर्विरचितं रघुपतिप्रसादं भुंजानाः सुखेन कालमयापयन्. एवंक्रमेण भोजने निश्चिन्तास्तेऽलसा एव बभूवुः. इदं वीक्ष्य श्रीसमर्था नानाविधैरुपायैस्तानलसान्विधातुं मठाद्बहिर्देशं प्रैषयन्.

एकदा कश्चन ब्राह्मणो दूरादागत्य श्रीसमर्थान् प्रणनाम. पृष्टश्चागमनकारणं 'अनुग्रहार्थिनमात्मानं' जगाद. श्रीसमर्था अपि तं महामंत्रमुपदिश्य स्वेन सह नानातीर्थानि पर्यटितुं निन्युः. तत्र कदाचिन्निरशनं, कदाचिद्वन्यफलभक्षणं, कदाचिदामधान्याहारः, कदाचिद्रात्रिंदिवं प्रवास इत्यनियतवेलं कार्याणि वीक्ष्य चिन्तातुरः स शिष्यो मनस्यचिन्तयत्. 'अहो ? मया खलु सुखार्थिनैतेषां शिष्यत्वं स्वीकृतं. सर्वे जना वदन्ति श्रीसमर्था राजगुरवः तेषां नास्ति कस्यापि वस्तुनो न्यूनतेति. श्रुत्वा चेदं चाफळमठे रामनाम घोषयन् प्रभूतानि पक्वान्नानि भुंजानः सुखेन कालं यापयिष्यामीति मन्वानोऽहमेषां शिष्योऽभवम्. साम्प्रतं तु सर्वं विपरीतमनुभवामि. तन्निर्विण्णोऽस्मि. सांप्रतमेतेषां दुःखफलकं शिष्यत्वं विहाय

तुकारामाणां शिष्यो भविष्यामि. ते च निरुपद्रवा एकत्रैव स्थित्वा केवलं विठ्ठलनाम घोषयन्ति' इति.

एवं मत्वा स शिष्यो रात्रावेव श्रीसमर्थानां सांनिध्यतोऽपससार. जगाम च पंढरपुरं. ननाम तुकारामसाधुवरान्. तैश्च पृष्ट आगमनकारणं 'अनुग्रहार्थिनमात्मानं' निवेदयामास. सस्मितवदनास्तुकारामसाधवः 'यदि पूर्वं कस्यचिदनुग्रहो गृहीतः स्यात्तदा स प्रत्यावर्तनीय' इति तमवदन्. स च तदाज्ञां प्रमाणीकृत्य प्रत्यागतः श्रीसमर्थचरणान् स्वानुग्रहग्रहणार्थं विज्ञापयामास. तथाविज्ञप्ताश्च श्रीसमर्थाः 'अनुग्रहमंत्रमुच्चार्य गण्डूषजलं पाषाणे क्षिप' इत्यवदन्. स च मूढो ब्राह्मणो जलगण्डूषमादाय महामन्त्रमुच्चार्य तज्जलं यदा पाषाणेऽक्षिपत् तदानीमेव तस्य वागिन्द्रियमनश्यत्. मूकीभूतश्च स यत्किंचिदपि वक्तुमसमर्थः ब्राह्मणो दुःखाकुलस्तुकारामसाधून् शरणं गत्वा चेष्टितेन सर्वं वृत्तं कथयामास. दयासागरास्तुकारामसाधवः स्वयमागत्य श्रीसमर्थान् ब्राह्मणानुग्रहार्थं विज्ञापयामासुः. अथ साक्षात्तुकारामसाधुभिर्विज्ञप्तास्ते श्रीसमर्थाः 'यत्र त्वया महामंत्राक्षराण्युच्चार्य गण्डूषजलं निक्षिप्तं तत्र चाक्षराण्यंकितानि सन्ति, तानि लीढि.' इति तं ब्राह्मणमादिशन्. तथानुष्ठिते च स ब्राह्मणः स्वीयां वाचं पुनरपि लेभे.

एवमेवैकदा सज्जनदुर्गे प्राकारमुपरि समुविष्टाः श्रीसमर्थाः स्वीयैः शिष्यैः समं पारमार्थिकीः कथाः कुर्वाणा अतिष्ठन्. अत्रान्तरे महावातेन नुन्नं तदीयं शाटीवस्त्रं प्राकारस्याधस्तादपतत्. तदानी समीपस्थान् कल्याणस्वामिनः श्रीसमर्थाः सहासमाहुः. कल्याण! शाटीवस्त्रं पतितमिति. असमाप्तेष्वेव वर्णेषु ते कल्याणस्वामिनोऽ-

विचार्यैवाधस्तादात्मानमपातयन्. तदानीं सर्वेऽपि कल्याणस्वामिनः पतितान् वीक्ष्य 'केवलं क्षुद्रस्य शाटीवस्त्रस्य कृते मृताः कल्याणस्वामिनः' इति ब्रुवाणाः शुशुचुः. श्रीसमर्थचरणेषु तु 'कल्याणस्य कथमकल्याणं स्यात्' इति वदत्सु सत्सु कल्याणस्वामिनः शाटीवस्त्रं गृहीत्वा समागता भगवतां श्रीसमर्थानां चरणाववन्दन्त.

श्रीसमर्थानां शिष्येषु भोलाराम नामा कश्चनैकः शिष्य आसीत्. स प्रकृत्यैव सरलः कपटानभिज्ञः. अतएव तस्य नामाऽपि श्रीसमर्थैर्भोलाराम इति स्थापितं. श्रीसमर्थाश्च यदा ताम्बूलं वांच्छन्ति तदा स भोलारामेणैव देय इति नियम आसीत्. श्रीसमर्थानां च तस्मिन् परां कृपामवलोक्य सर्वेऽप्यन्ये शिष्यास्तमद्विषन्.

एकदा श्रीसमर्थैस्तांबूलदानार्थमाज्ञप्तः स भोलारामो यस्मिन् पाषाणे ताम्बूलं चूर्णीकृत्य श्रीसमर्थेभ्यः प्रतिदिनमदात्तं पाषाणमशोधयत्. शोधयंश्चिरादपि तं न लेभे. यतः स पाषाणस्तद्द्वेषिभिर्निभृतमन्यत्र स्थापितः. श्रीसमर्थाश्च ताम्बूलानयनार्थं भूयोभूयः समादिशन्. तेन चिन्तातुरः स भोलारामः तस्मिन्दिने स्वमुखे तं ताम्बूलं निधाय स्वदन्तैरेव खण्डयित्वोच्छिष्टमेव ताम्बूलं समर्थेभ्यः प्रादात्. तमादाय स्वमुखे निदधतः श्रीसमर्था भोलाराममुद्दिश्य विहसन्तोऽगदन्. भोलाराम ? अद्य खलु त्वया दत्तस्ताम्बूलोऽतीव मधुरः, प्रतिदिनमीदृशमेव ताम्बूलं देहीति. तामाज्ञां शिरसि कुर्वाणे भोलारामे तथैव प्रतिदिनं कुर्वति सति सर्वे शिष्या अकुप्यन्. परस्परमवदंश्च 'एष पापी प्रतिदिनमुच्छिष्टताम्बूलदानेनास्मद्गुरून् श्रीसमर्थान् दूषयति' इति. प्रायतन्त च तस्माद्व्यापारान्निवर्तयितुं तं भोलारामं परन्तु यशस्विनो नाभवन्. ततश्चेयं

वार्ता महाराजशिवाजिराजाय निवेदनीया स एव गुरुपादान् सर्वं निवेदयिष्यतीति विचार्य गुरुदर्शनार्थमागताय शिवराजाय तद्वृत्तं न्यवेदयन्. स तु तद्वृत्तं निशम्य विस्मितोऽपि श्रीसमर्थानां परचित्तवृत्तिज्ञानमलौकिकमिति प्रत्यभिजानन् किंचिदपि वक्तुं न प्रसेहे.

अथ मध्याह्ने भोजने वृत्ते सति श्रीसमर्थास्ताम्बूलानयनार्थं भोलाराममवदन्. तदानीमेव शिवराजं स्वयं ताम्बूलदानायोद्यतं श्रीसमर्थाः 'भोलारामस्यैव मे रोचते ताम्बूलस्ततस एव तं विरचयत्विति, वचनेन न्यषेधन्. तथापि भोलरामस्य ताम्बूलचूर्णकारी पाषाणोऽशुद्ध इति वदन्तं शिवराजं श्रीसमर्थाः 'भोलारामं ब्रूहि अहं हि ताम्बूलचूर्णकारी पाषाणः शुद्धो वा मलिनो वेति ज्ञातुमिच्छामि तदद्य ताम्बूलस्तेन पाषाणेन सममेव प्रेषणीय' इति समादिशन्. अथ शिवराजोऽपि गत्वा भोलारामं श्रीसमर्थानां नियोगमवदत्. स तु तस्मिन्नेव क्षणे गुर्वाज्ञां शिरसि कृत्वा तं ताम्बूलं मुखे प्रक्षिप्य सम्यक् स्वदन्तैश्चूर्णयित्वा खड्गेन स्वकण्ठमेवाच्छिनत्. अदाच्च तद्रुण्डं शिवराजाय. शिवराजस्तु तद्वृत्तं समीक्ष्य परं विस्मितो भीतश्च किंकर्तव्यतामूढोऽभवत्.

अथ कथमपि गुरुपादा एव शरणमिति मन्वानः शिवराजस्तद्रुण्डं गृहीत्वा शनैः शनैः श्रीसमर्थानां समीपमागच्छत्. न्यधाच्च तेषां पुरस्तात्तद्रुण्डं. श्रीसमर्था अपि परमप्रेम्णा तद्धस्ताभ्यां गृहीत्वा मुखविगलितं ताम्बूलं भक्षयन्तः शिवराजमवदन्. वत्स? शिवराज? किमेष ताम्बूलचूर्णकारी पाषाणः शुद्धो नवेति? तच्चेदं श्रीसमर्थानां साभिप्रायं वचनं निशम्य लज्जितः शिवराजस्तूष्णीमतिष्ठत्. ततश्च श्रीसमर्थैस्तद्रुण्डं स्वस्थाने स्थापयितुमाज्ञप्तः शिवराजः सकम्पं

तद्धस्तेनोद्वहन् पतितेन कबंधेनायोजयत्. तस्मिन्नेव क्षणे स भोला-रामः सुप्त इवोदतिष्ठत्.

वाचकाः? एषोऽलौकिक्या भक्तेर्विषयः. तेन ये खलु न जानन्ति तादृशीं भक्तिं, तेषां नास्त्यस्मिन्विषये वक्तुमपि योग्यता. अतएव तेषां शंकायाः समाधानमपि न शक्यं. अस्तु.

श्रीसमर्थानां सर्वशिष्येषु मध्ये कल्याणस्वामिन एव परमप्रिया आसन्निति पूर्वमेवोक्तं. प्रायः सर्वां श्रीसमर्थसेवां कल्याणस्वामिन एवाकुर्वन्. तेन चान्ये शिष्या निभृतं तेभ्योऽद्रुह्यन्. तमिमं द्वेषं श्रीसमर्था ज्ञात्वा कल्याणस्वामिनां योग्यताप्रदर्शनार्थमेकं चमत्कारं चक्रुः. स च चमत्कार इत्थम्—

एकदा श्रीसमर्था अतिदुर्गमपर्वतमध्यं गताः समं शिष्यगणै-स्तत्रैव रात्रौ न्यवसन्. मध्यरात्रे च ते ताम्बूलं स्वशिष्यानयाचन्. ततश्च केचन शिष्या महता जवेन धावन्तस्ताम्बूलदलकरण्डके नागवल्लीदलान्यशोधयन्. परन्तु तत्र नागवल्लीदलान्यलब्ध्वा किंकर्त-व्यतामूढास्तत्रैव तेऽतिष्ठन्. कल्याणस्वामिनस्तु चाफलमठात्ताम्बू-लदलान्यानेष्यामीति मन्वाना महता जवेन प्रतस्थिरे. अचिरादेव पर्वतनितम्बमवतरन्तस्ते महोल्बणविषेण सर्पेण दष्टाः क्षणादेव भूमौ न्यपतन्. पतनसमये च 'जय जय रघुवीरसमर्थ' इति त्रिः उच्चैर्घोषयामासुः.

श्रीसमर्थाश्च तं घोषं निशम्य स्वशिष्यान् प्रति 'क एष इत्थ-मुद्घोषयति, दृश्यतां' इति समाज्ञापयन्. एवमाज्ञप्ता अपि मध्यरात्रे गाढतिमिराच्छादिते हिंस्रपशुव्याप्ते प्रदेशे गन्तुमशक्तास्ते शिष्या

स्तत्रैव तस्थुः. ततश्च श्रीसमर्थाः स्वयमेव करदीपिकाः प्रज्वाल्य निर्गता अचिरादेव तत्स्थलमागताः सर्पदंशेन निश्चेतनान् भुवि पतितान् कल्याणस्वामिनोऽपश्यन्. कल्याणस्वामिनामीदृशीमवस्थामवलोक्य दयार्द्राः श्रीसमर्थास्तान् स्वहस्तकमलेन पस्पर्शुः. स्पृष्टाश्च तस्मिन्नेव क्षण उत्थाय कल्याणस्वामिनः श्रीगुरुचरणकमलयोरपतन्. ततश्च पुनरपि चाफळमठं ताम्बूलानयनार्थं गच्छन्तः श्रीसमर्थैश्च निषिद्धाः प्रत्यागतास्तमेव करण्डकं ताम्बूलदलपरिपूर्णमपश्यन्. श्रीसमर्था अपि कल्याणस्वामिनामीदृशीं गुरुभक्तिमवलोक्य सन्तुष्टाः सर्वानपि स्वशिष्यानवोचन् 'यादृश्येव गुरुभक्तिस्तादृश्येव गुरुप्रीतिर्भवति. न तत्रास्ति द्वेषस्यावकाशः. वस्तुतस्तु अस्मिन्विषये द्वेषं विहायाधिकमेव गुरुभक्तिः करणीयेत्युचितमिति.

एकदा श्रीसमर्थाः स्वसंनिधौ मिलितानगणितान्शिष्यान् वीक्ष्य परीक्षितुमिच्छन्तः सहसा शयनगृहादुत्थाय खड्गहस्ता महता जवेनाधावन्. तांश्चोन्मत्तवद्विचेष्टमानान् वीक्ष्य सर्वेऽपि शिष्या अपलायन्त. श्रीसमर्थाश्च घोरमरण्यं प्रविश्य निभृतमेकस्यां कन्दरायामतिष्ठन्. मठे च सर्वेऽपि शिष्याः श्रीसमर्थानुन्मत्तान् मन्वानाः स्नानभोजनविहीनाः किंकर्तव्यतामूढाः तस्थुः. तदानीं च कल्याणस्वामिनो ग्रामान्तरमगच्छन्. यदा च ते ग्रामान्तराच्चाफळमठमागतास्तदा श्रीसमर्थानुन्मत्तान्निशम्य हसन्तस्तदरण्यं प्रविश्य श्रीसमर्थानशोधयन्.

श्रीसमर्थाश्च दूरादेवागच्छतः कल्याणस्वामिनो वीक्ष्योच्चैः 'कल्याण ? माऽऽगच्छ. यद्यागमिष्यसि तदाऽनेनासिना तव शरीरं शकलीकरिष्यामीति तर्जयन्तो महतः पाषाणान् कल्याणस्वामिनां

शरीरमनु चिक्षिपुः. श्रीसमर्थाश्चातीव बलिनस्तेन तैः क्षिप्ताः पाषाणा जवेन श्रीकल्याणस्वामिनः परितो निपेतुः परन्तु नैकोऽपि तदीयं गात्रं पस्पर्श. ततः क्रमेणोपर्यागत्य भयंकरीस्तर्जना अगणयित्वा कल्याणस्वामिभिः श्रीगुरुचरणकमले स्वहस्ताभ्यां धृते सति दयार्द्राः श्रीसमर्थाः सहासं 'कल्याण? अहं चोन्मादग्रस्तः संवृत्तस्तदिदं त्वया महत्साहसमनुष्ठितं. यदि चोन्मादतोऽहं त्वामहनिष्यं तदा किं साध्वभविष्यत्? न पुनस्त्वया कदापीदृशं साहसमनुष्ठेयमिति जगदुः. तच्चेदं श्रीसमर्थानां वचनं निशम्य हसन्तः कल्याणस्वामिनः 'गुरुपादाः? अपूर्वमिदं यत् उन्मत्ता आत्मानमुन्मत्तान् जानन्ति कथयन्ति च वयमुन्मत्ता इति' इति बभाषिरे. विज्ञापयामासुश्च मठे तावत्सर्वेऽपि शोकाकुलाः स्नानादिक्रियाविहीना रघुपतिसेवा-निरुत्साहास्तिष्ठन्ति. तत्सर्वानपि सान्त्वयित्वा पश्चात्कीदृशोऽयमुन्माद इति परीक्षयिष्यामह इति.

एवंक्रमेण श्रीकल्याणस्वामिनां भक्तिविशेषे शुक्लेन्दुवत्प्रवर्धमानेऽन्ये सर्वेऽपि शिष्यास्तेभ्योऽद्रुह्यन्. श्रीसमर्था अपि 'पुनरपि केनचित्प्रसंगेन सर्वेभ्यः कल्याणस्य भक्तिरहस्यं प्रदर्शयिष्यामि' इत्यमन्यन्त.

एकदा कल्याणस्वामिषु ग्रामान्तरं गतेषु श्रीसमर्थाः सूर्योदये जातेऽपि शयनागारे तल्पमधिशयाना उच्चैरोगव्यथामदर्शयन्. श्रीसमर्थानामिमावस्थां वीक्ष्य सर्वेऽपि प्रमुखाः छात्राः सहसा धावन्तो रोगचिकित्सामारभन्त. तैश्च पृष्टाः श्रीसमर्था नितम्बस्या-धस्तान्महान्तं स्फोटमदर्शयन्. अवदंश्च 'अस्य प्रतीकारः खलु केवलं चूषणमेव. परन्तु अस्य स्फोटस्य विषमयत्वाद्यधेकोऽपि

बिन्दुश्चूषितुरुदरं गच्छेत्तदा स तस्मिन्नेव क्षणे मरिष्यति ' इति. ते च सर्वे मिलिताः शिष्याः तमीदृशं स्फोटं तथा भयंकरं तत्प्रतीकारं च वीक्ष्य निशम्य भीताः किंकर्तव्यतामूढास्तस्थुः. नैकोऽपि तेषां मध्ये शिष्यस्तं स्फोटं चूषितुमशकत्. युक्तं चेदम्—कोहि खलु गुरोः कृतेऽत्यन्तप्रियेषु स्वप्राणेषु तिलांजलिं क्षिपेत्? वाचकाः? बहुभिः शास्त्रकारैः 'अस्ति पुनर्जन्म' इति प्रतिपादितम्' बहवो गुरवः स्वशिष्यान् कुशलैस्तर्कैरनुभवसहायैः 'अस्ति पुनर्जन्म' इति पाठयन्ति, परन्तु समये प्राप्ते केचनैव पुनर्जन्मनि विश्वसन्तः स्वासून् पुष्पवत् परोपकारार्थमर्पयन्ति. नहि क्रूरैर्मानवपशुभिराक्रान्तां भयत्रस्तनयनां कामिनीं स्वभगिनीं मन्यमानाः स्वप्राणानपि पातयित्वा तां मोचयन्तो नरशार्दूला इह जगति बहवो जायन्ते! नापि दुर्बलान् रोगिणो वा भीतान् वा जनान् स्वबन्धुत्वेन मन्यमानाः स्वदुःखपर्वतमपि तृणीकृत्य परेषां दुःखपरिहाराय प्रयतमानाः सज्जनाः प्रतिस्थानमुपलभ्यन्ते? अतएव केनापि कविना 'परदुःखेन दुःखिनो विरला' इत्युक्तं.

सामान्यतो जनाः स्वाभीष्टं वाञ्छन्त एव केनचित्संगच्छन्ते. यथाहि पक्षिणः सस्यपूर्णं क्षेत्रमायान्ति, किलकिलशब्दैस्तदुद्घोषयन्ति, तथैव धनिनं जनं सर्वेऽपि जनाः स्वेच्छापूरणार्थमागच्छन्ति. यदा च तस्य धनं विनश्यति तदा तु ते सर्वेऽपि पक्षिणइवान्यत्र प्रयान्ति. सज्जनाः? न खल्वियं कामिजनानामेव रीतिः किंतु सर्वेषामेव. शिष्या अपि तमेव गुरुमाश्रयन्ते यस्मै बहवो जनाः स्पृहयन्ति. कल्याणस्वामिन इव नैष्ठिकाः शिष्याः श्रीसमर्था इव जगत्कल्याणदक्षा गुरवो विरलतमा एव. अस्तु.

एवं चिंतातुरेषु सर्वेषु प्रतिदिनं श्रीसमर्थास्तत्स्फोटदुःखं दुःसह-मदर्शयन्. तादृशांश्च दुःखोद्गारान् व्यसृजन् यैः प्राणः क्षणात् प्रयातीति सर्वेऽपि शिष्या निरचिन्वन्. एवंगच्छति काले श्रीकल्याणस्वामिनो ग्रामान्तराच्चाफळमठमागच्छन्. ते सर्वेऽपि शिष्यास्तेभ्यः सर्वं वृत्तं निवेद्य श्रीसमर्थदर्शनाय ताननयन्. श्रीसमर्थाश्च कल्याणस्वामिनो वीक्ष्य शोकाकुलाः—वत्स ? कल्याण ? आगतस्त्वं ! समीचीनं कृतं. अयं त्वसाध्यो रोगो मामचिरादेव स्वर्गं गमयिष्यति' इति विलेपुः. कल्याणस्वामिनस्तु सान्त्ववचनानि वदन्तस्तस्य स्फोटस्य चूषणे सनद्धा अभवन्. श्रीसमर्थैश्च भूयोभूयो निषिद्धा अपि न तस्माद्व्यापाराद्व्यरमन्.

अथ गुरूणामनुज्ञया कल्याणस्वामिनस्तं स्फोटं चूषितुमारभन्त. सर्वेऽपि शिष्याः—कल्याणस्वामिनः सद्य एव कथं पंचत्वं गमिष्यन्तीति दर्शने बद्धकुतूहलास्तत्रागच्छन्. परन्तु महदाश्चर्यं—यत्—स्पृष्टमात्र एव तस्मिन् स्फोटे श्रीसमर्थाः समं कल्याणस्वामिभिरुच्चैर्जहसुः. अगदंश्च—कल्याण ? एते खलु सर्वेऽपि शिष्या उदरंभरयः सौख्यार्थमेव मामुपासते. तेन च ते कथं मदर्थे प्राणान् जह्युः ? त्वं तु केवलं गुरुभक्तो गुरुहितार्थं स्वप्राणानपि त्यक्तुमुद्यतः. 'यो हि स्वहितं न पश्यति भगवान् रघुपतिस्तस्य हितं चिन्तयति' इति.

वाचकाः ? क्व गतः स भयंकरवेदनाकारी स्फोटः ? क्व नु गतं तदीयं महादुःखं ? सज्जनाः ? तत्सर्वं कृत्रिमं केवलं शिष्यपरीक्षार्थमेव श्रीसमर्थैः कृतं. स च प्रकार इत्थं—तस्मिन्दिने शिवराजेनात्युत्तमान्याम्रफलानि प्रेषितानि. तानि सर्वेभ्यो वितीर्यावशिष्टमेकं फलं गृहीत्वा श्रीसमर्थैरिदं स्फोटनाटकं कृतम्. अस्तु.

एवं श्रीसमर्थानामुपरि कल्याणस्वामिनां निर्विशेषां भक्तिं निरीक्ष्य सर्वेऽप्यन्ये शिष्या द्वेषं विहाय तान् श्रीसमर्थानां प्रतिबिंबममन्यन्त.

वाचकाः ? एवंविधैर्बहुभिरुपायैः श्रीसमर्थाः प्रतिदिनं स्वशिष्यान् परीक्षयामासुः. सदाचाररतांस्तान् परीक्ष्यार्यावर्ते स्थाने स्थाने रघुपतिमूर्तिमण्डितान् मठान्विधाय तत्र तत्र तानस्थापयन्. तथा स्थापिताश्च ते शिष्या अपि सदाचारोपदेशैर्जनानां चेतांस्याकर्षन् सदाचारैर्लोकजागृतिमकुर्वन्. यद्यपि सन्ति बहवः साधवोऽस्मिन्नार्यावर्तेऽभवंश्च, परन्तु श्रीसमर्थसदृशो नैकोऽपि व्यवहारतत्वज्ञानयोः पारंगतो यथायोग्यं सर्वानपि स्ववशान्विधाय लोकोद्धाररूपं कार्यमकरोत्.





# ( ११ ) ( श्रीसमर्थचरणाः शिवराजश्च )

सज्जनाः ? यदर्थं श्रीसमर्था अस्मिन् जगतीतले समवतीर्णाः ! तैश्च यदर्थमियती तपस्या कृता, सर्वत्र मठान् स्थापयित्वा लोकजागृतिर्विहिता, शिष्यमंडली च स्थापिता, तस्य निदर्शकमिदं प्रकरणमिति सविस्तरं निरूपयामि. तत्रापि सुखेन बोधायावान्तरविषयानुक्रमं दर्शयामि.

१ शिवराजस्य श्रीसमर्थानां दर्शनमनुग्रहश्च.

२ शिवराजस्य श्रीरामदासस्वामिषु भक्तिः.

३ श्रीसमर्थानां शिवराजे प्रेम.

४ श्रीसमर्थैराचरिताः शिवराजजागृतावुपायाः.

५ श्रीसमर्थैः शिवराजद्वारा कारिता सज्जनसेवा.

प्राय इदं सर्वत्र जगतीतले दृश्यते यत् कियत्यपि सामग्री संपादिता न साक्षादेव कार्यं जनयति किंतु केनापि कर्त्राऽधिष्ठिता. यद्यपि कर्ताऽपि सामग्र्यामेवान्तर्भवति तथापि स कारणविशेषतया पृथक् व्यपदिश्यते. यथा च निराकारा चैतन्यशक्तिः सर्वाधारभूताऽपि न साक्षात्किमपि कार्यं कर्तुं प्रभवति. तादृशकार्यविशेषविधानार्थं हि सा सगुणमेव रूपमपेक्षते. ततएव च श्रीरामचन्द्रादयोऽवतारा अभवन्. नैतावता तस्या मूलचैतन्यशक्तेर्न्यूनत्वं. तस्या एव साहाय्येन सा सगुणचैतन्यशक्तिर्महान्ति कार्याणि कर्तुं शक्नोति. एवमेव प्रकृते श्रीसमर्थचरणैः संपादिताऽलौकिकोपासनासामर्थ्यसिद्धिर्न साक्षादेव दुष्टभूपालयवनाक्रान्तां भारतभुवं मोच-

यितुं प्राभवत् किंतु तादृशकार्यविधानयोग्याऽन्यैव व्यक्तिरपैक्ष्यत. श्रीसमर्थाश्च तादृशव्यक्तेः साहाय्यं चक्रुः. किंबहुना श्रीसमर्थानां साहाय्यंविना मूलचैतन्यशक्तेः साहाय्यंविना साकारचैतन्यशक्तिरिव सा व्यक्तिः किमपि कार्यं कर्तुं न प्राभविष्यत्.

श्रीसमर्थाश्च सर्वमिदं मनसि विचारयन्तस्तादृशीं व्यक्तिमशोधयन्. परन्तु न ते चिरादपि तामलभन्त. सज्जनाः ? कथं खलु तादृशी व्यक्तिः सुलभा स्यात्! सर्वत्र महंमदीयधर्मानुयायिषु बलाढ्येषु स्वधर्मप्रसारं बलादेव विधाय कृत्स्नमार्यावर्तमात्मसात्कृत्वा शासकेषु सत्सु कः खलु मन्दधीस्तद्विरुद्धमाचरित्वाऽऽत्मानं शलभायेत ? नासीत्तदानीमेकमपि राज्यं यन्न सम्राजो यवनपतेः सामन्ततामभजत. यवना हि स्वतेजसा सर्वाण्यपि क्षत्रियमंडलानि निस्तेजस्कान्यकार्षुः. नैतावदेव किंतु बहवः क्षत्रियराजाः स्वात्मजा दिल्लीश्वराय समर्प्य तदनुकम्पामयाचन्त. केचन लौकिकसुखभोगलुब्धाः स्वधर्मं त्यक्त्वा राजधर्मं समाचरन्. अन्ये च कनकदण्डमण्डितहस्ता राजसेवका भूत्वा दिल्लीश्वराय सभामार्गे वान्तःपुरमार्गे वाऽदर्शयन्. बहवश्च स्वदायादैः समं विहितकलहास्तन्नाशार्थं दिल्लीपतिं सिषिवुः. किंबहुना! नासीत्तादृशमेकमल्पं राजकुलं यत् स्वाभ्युदयार्थं यवनाधिपं नासेवत.

वाचकाः ? एवंरीत्या सर्वस्मिन् भारतवर्षे यवनैराक्रान्ते सर्वेषु च भारतवासिषु स्वधर्मं स्वाभिमानं विस्मृत्य परसेवारतेषु सत्सु कथं खलु श्रीसमर्थचरणानां ध्येयेनानुसृतध्येया व्यक्तिः सुलभा स्यात्. तथापि ते समर्थचरणा निराशा नाभवन्. यतस्ते 'यो हि नारायणो मां स्वधर्मोद्धारार्थमाज्ञापयत् स एव सामग्रीं कर्तारं च

दास्यतीति' दृढं व्यश्वसन्. एवं क्रमेण प्रयाते काले सर्वत एव नाना साधुवरा धर्मप्रसारं कुर्वन्तो महंमदीयधर्मस्य राज्यस्य च धूमकेतव इव समुद्यन्ते स्म. श्रीसमर्थाश्च पूर्वदर्शितरीत्या सर्वैः साधुवरैः समं मिलित्वा कार्याणि कुर्वन्तोऽपि तादृशव्यक्तेः शोधनेऽनलसा एवासन्. श्रीसमर्थशिष्याश्च काषायवस्त्रधारिणः सर्वत्रैव व्यचरन्. तत्र च श्रीधरस्वामिनो नाम परमचतुराः श्रीसमर्थशिष्याः 'शिवाजिर्नाम कश्चन तरुणो भोसलेकुलभूषणं स्वराज्यस्थापनार्थं प्रयतमानः समीचीनं मार्गप्रदर्शकं गुरुमपेक्षते' इति कर्णाकर्णिकयाऽशृण्वन्. श्रुत्वा ते तं शिवराजं निभृतं साक्षात्कृत्य सन्तुष्टाः श्रीधरस्वामिनः श्रीसमर्थान् प्रत्येत्यैतद्वृत्तमवदन्. श्रीसमर्थास्तन्निशम्य सानन्दा अपि पुनः पुनस्तस्य शिवराजस्य नित्यवर्तननिरीक्षणाय तानेव श्रीधरस्वामिनः प्रायुंजत. युक्तं चैतत्. यदि कमपि तरुणं पुरतः कृत्वा लोकोद्धाररूपं दुष्करं कार्यं क्रियते, तदा विपरीते तस्मिंस्तस्य स्वस्य महता कष्टेन संपादितायाः सामग्र्याश्च नाश एव भवेत्. तारुण्यं नाम क्षणिकवृत्तीनामास्पदं. स्वभावचंचला हि तरुणा अस्मिन्क्षणे इमां वृत्तिमाश्रिताः क्षणादूर्ध्वमपरामेवाश्रयिष्यन्त इति वयं सर्वे प्रतिदिनं पश्यामः. तस्मादपरीक्ष्य च कस्मिन्नपि विश्वासो नाम नाश एवेति.

प्रियवाचकाः? श्रीसमर्थकृपापात्रस्य पुण्यश्लोकस्य गोब्राह्मणप्रतिपालकस्य शिवराजस्य नैसर्गिकी चेतःप्रवृत्तिः कीदृशी आसीदेति ज्ञातुं तच्चरितं संक्षेपतो लिखामि.

शिवराजश्च सुविख्याते श्रीमहाराजप्रतापसिंहकुलसंबद्धे भोसलेकुले शहाजीनामक्षत्रियवरात् जिजादेवीनाम्न्यां नारीरत्नखन्यां

समुत्पन्नः. शिवराजस्य मातामहपितामहावुभावपि विजापुराधीश्वरं यवनमेव भृत्यत्वेनासेवेताम्. निवृत्ते च पितामहे राजा शहाजिरपि शिवराजस्य पिता पितृवत्तमेवासेवत. सेवया सन्तुष्टात्तस्माल्लब्धौ द्वौ प्रान्तावभुंक्त. शिवराजश्च पुण्यपत्तनान्नातिदूरे शिवनेरीदुर्गेऽजायत. तस्य पिता तु तेन यवनाधीश्वरेण यस्मिन् कस्मिन्नपि कर्मणि नियुक्तः कर्णाटकविभाग एवावसत्. तेन च स्वकुटुंबस्य तथा संपादितस्य भूमिभागस्य व्यवस्थार्थं "दादोजीकोंडदेव"नामा ब्राह्मणः स्थापितः. यदा तु शिवराजः पंचवर्षः संवृत्तस्तदाप्रभृत्येव स स्वसेवकबालकानां सेनाविभागान्विधाय कृत्रिमैर्युद्धैरयुध्यत. स च प्रकृत्यैव दीनदयालुर्दुर्बलपीडाकारिणो यवनानद्वेट्.

अथ दादोजीकोंडदेवः 'शिवराजेन समं विजापुरनगरमागच्छ' इति तत्स्वामिनाऽऽज्ञप्तः शिवराजेन समं विजापुरं जगाम. तदानीं च शिवराजः केवलं दशवर्ष आसीत्. पित्रा शहाजीराजेन राजसभां नीतोऽपि शिवराजः पितृवत्तं यवनाधिपं न ववन्दे. यवनाधिपस्तु शिवराजस्य शरीरसौष्ठवमालोच्य परं सन्तुष्टः स्मयमानः 'पितृवत्त्वं मां कुतो न वन्दस' इत्यपृच्छत्. शिवराजस्तु तस्मिन्नेव क्षणे 'त्वं गा भक्षयसि ततो न वन्दे. गावश्च न आर्याणां बहिश्चराः प्राणा' इति प्रत्युत्तरयामास. तस्य तद्विलक्षणमुत्तरं निशम्य सर्वे महंमदीयाः सभ्याः क्रोधान्धा अभवन्. यवनाधीशोऽपि कुपितः केवलं बालक इति मत्वा तमपमानं सेहे. शहाजीराजस्तु कथमपि गृहमागतः शिवराजं तादृशौद्धत्यत्यागाय बहूपदिदेश.

एकदा शिवराजो विजापुरे निवसन् दैनिकं क्रममनुसृत्याश्वेन पर्यटितुं जगाम. तत्र कश्चन यवनो गां हत्वा तन्मांसं विक्रेतुं राज-

मार्गे एवोपाविशत्. तं वीक्ष्य शिवराजः संजातकोपो यवनं सहसा यमालयं प्रेषयामास. सेयं वार्ता तदीयैर्बान्धवैर्न्यायालयं नीता राज्ञा श्रुता. शिवराजे बद्धप्रेमभावो यवनाधीशस्तु भूयोभूयस्तैस्तैर्यवनाधिकारिभिर्विज्ञप्तोऽपि शिवराजं नादण्डयत्. शहाजीराजस्तु पुत्रस्येदं वर्तनं वीक्ष्य दुःखातुरो नानाविधैरुपायैस्तमस्माद्दुर्वर्तनान्निवर्तयितुं प्रायतत परन्तु न लेभे यशः.

एवमेवैकदा शिवराजः सशस्त्रः पद्भ्यामेव पर्यटितुं ययौ. मार्गे च कंचन ब्राह्मणं स्वीयां धेनुं गृहीत्वा गच्छन्तं केनचिद्दुर्मदेन यवनेन बलादेवाक्रम्यापहृतधेनुमाक्रोशन्तं ददर्श. पृष्टश्चाक्रोशकारणं स सर्वं निवेद्योर्ध्वमवलोकयन् 'परमात्मन्? नास्ति कोऽप्यस्मिन भूतले गोब्राह्मणप्रतिपालकः. तत्त्वमेवावतीर्य पाहि दुर्मदैर्यवनैराक्रान्तान्नः?' इति सकरुणं विललाप. तस्य करुणानालापान्निशम्य क्रुद्धः स शिवराजस्तं विप्रं 'क्वासौ दुरात्मा यवन' इत्यपृच्छत्. अचिरादेव तेन द्विजन्मना दर्शितं यवनं निहत्य सदक्षिणां गां विप्राय वितीर्यास्य दुःखस्य निवारणार्थमुपायं चिन्तयन् गृहमाययौ. साऽपि वार्ता न्यायालयं प्राप्ता तेन यवनाधीश्वरेण श्रुता.

इत्थं प्रतिदिनं वर्तमानस्य पुत्रस्येदं वर्तनमुच्छृंखलं मौढ्यमूलकं मन्यमानः शहाजीराजः स्वपुत्रं स्वदेशं प्रेषयामास. सर्वं विजापुरे संवृत्तं शिवराजस्य वर्तनं निवेद्य तस्य सम्यक् शासनाय दादोजीकोंडदेवमशात्.

शिवराजोऽपि विजापुरनगरान्निर्गत्य स्वदेशं प्राप्तः सर्वानपि पर्वतवासिनो महाराष्ट्रीयानेकीकृत्य यवनराज्यं विजित्य स्वराज्यं स्थापयितुं व्यचिन्तयत्. अस्मिन् कर्मणि सहाया बहवो महाराष्ट्रीयमुख्या

आसन्. एवं प्रचलिते स्वराज्यस्थापनासन्नाहे शिवराजः सैन्यस्थापनार्थं द्रव्यमपेक्षमाणः सर्वं स्वपितुर्द्रव्यमात्मसादकरोत्. दादोजीकोंडदेवः स्वामिरोषभिया तथावर्तमानं शिवराजं निषिषेध, परन्तु सत्यप्रतिज्ञः शिवराजो न स्वकार्यादुपारराम. माता जिजादेवी तु स्वपुत्रस्यालौकिकानि कार्याणि पश्यन्ती तं भूभारहरणायावतीर्णं शंकरमेव मेने. क्रमेण च शिवराजो विजापुराधीशस्य राज्यस्थानि बहूनि दुर्गाणि आत्मसादकरोत्.

वाचकाः ? नायं समयः कृत्स्नस्य शिवराजचरितनिवेदनस्य. तत्तु पवित्रं चरितमिदानीमेव स्वातंत्र्येण लिखितमास्ते. श्रीसमर्थाश्च स्वाभीष्टसाधनार्थं कमपि पुरुषार्थिनं पुरुषं कामयमानाः श्रीधरस्वामिद्वारा श्रुतशिवराजचरिताः पुनःपुनरपि श्रीशिवराजाचरणं शोधयन्तो न लेशतोऽपि तत्र स्खलितं लेभिरे. एवं स्थिते श्रीसमर्थाः सर्वात्मना शिवराजमेव पुरस्तात्कृत्वा लोकोद्धारं कर्तुं मतिमकुर्वन्. शिवराजोऽपि कौरवपाण्डवानां कथाः शृण्वन् सदाचाररत एवासीत्.

एकदा शिवराजस्य दुर्वृत्तानि निशम्य क्रुद्धेन विजापुराधिपेनातिबलाढ्यः सेनापतिः शिवराजशासनाय प्रेषितः. स तु शिवराजराज्यं प्रविश्य सर्वान् विप्रान् यवनान् विधाय प्रतिदिनमगणिता गा घातयन्, परांगना दासीकुर्वन्, तं प्रदेशं यमकिंकराक्रान्तमिव जर्जरितमकरोत्. तत्रैकस्मिन् ग्रामे निवसतो विप्रस्य तरुणी स्नुषा जलानयनार्थं बहिरागता तेन यवनसेनापतिनाऽवलोकिता. तत्क्षण एव स कामाकुलः कामयमानस्तां गृहीतुं ससेवकोऽनुदधाव. अनुधावतस्तान् यवनान् वीक्ष्य सा तरुणी भीता घटं तत्रैव निक्षिप्य स्वशीलरक्षणार्थं समीपवर्ति मारुतिमन्दिरं प्रविवेश. पिधाय च

द्वारकपाटे अन्तरीश्वरं स्मरन्त्यतिष्ठत्. स च यवनः कामान्धस्तद्द्वारच्छेदनाय सेवकानादिदेश. सेवकेष्वपि क्रमेण द्वारं समुद्धाटयत्सु सत्सु सा तरुणी भयार्ता ब्राह्मणस्नुषा महता शोकेन—शिवराज? दीनपालक? रक्ष मां. पालय मम पातिव्रत्यमेभ्यो यवनराक्षसेभ्यः, इति चुक्रोश. स तु यवनसेनानायकः 'त्वं वृथा मा क्रोश! स दुरात्मा शिवाजिरितो दूरं वर्तमानस्तवाक्रोशं न श्रोष्यतीति वदन् जहास.

अथ भिन्ने कपाटयुग्मे मंदिरं प्रविष्टः स दुरात्मा यवनो यावत्तामबलामितस्ततः स्वशीलरक्षणाय धावन्तीं गृहीतुं हस्तयुगलं वलयीचकार, तावदेव शिवराजो युद्धवेषधारी सहसा तद्देवालयं प्रविश्य तस्मिन्नेव हस्तयुगले तं यवनसेनापतिमाचकर्ष. अब्रवीच्च—दुरात्मन्? यवनाधम? दीनपालनार्थं बद्धकंकणः शिवाजिर्दूरस्थोऽपि समीपस्थ एव. अबलानामाक्रमणे किं पौरुषं दर्शयसि! परांगनाहरणं नाम न पापमिति भवन्तो मन्यन्ते. धिक् युष्मान्. अहं चास्य पापस्य क्षालनार्थं त्वत्सजातीयानां शासनार्थं च त्वां मम भवानीखड्गस्य बलिं करोमीति. अचिरादेव तस्य दुरात्मनो यवनस्य देहो द्विधा बभूव. तां च ब्राह्मणवधूं सान्त्वयित्वा स्वसैनिकगोपितां विधाय गृहं प्रैषयत्. वाचकाः? एवंविधाः प्रकाराः प्रतिदिनमजायन्त. शिवराजश्च न केवलं यवनानेव कुमार्गगामिनोऽशात्, किंतु स्वकीयानपि. तेन च समस्तो लोकस्तस्मिन्विश्वसिति स्म. प्रतिदिनं च यवनदुर्वृत्तत्रस्ता देशमुख्या ग्राममुख्याश्च यवनानामाधिपत्यं त्यक्त्वा शिवराजस्याधिपत्यं स्वीचक्रुः. तेन शिवराजराज्यसीमा प्रतिदिनं शुक्लेन्दुरिव ववृधे. विजापुराधीशस्तु तेन

भीतः क्रमेणोत्तमोत्तमानगणितसेनासंभारान्वितान् सेनापतीन् शिवराजस्य नाशार्थं प्रैषयत्. परन्तु तान् सर्वानपि निहत्य श्रीशिवराजो राहुमुक्तः सूर्यइवाधिकतरमुल्ललास.

एकदा कश्चन परमभक्तो हरिदासः श्रीशिवराजस्य राजधानीमाजगाम. शिवराजस्तं सत्कृत्य हरिकीर्तनश्रवणेच्छां चक्रे. शिवराजश्च निसर्गत एव हरिकीर्तनश्रवणे साधुवरसमागमे भगवन्नामग्रहणेऽतीव लोलुप आसीत्. स यथावकाशं विख्यातानां साधूनां दर्शनार्थं तन्निवासं गत्वा तान् वीक्ष्य तद्दत्तानाशीर्वादान् जग्राह. अस्तु. स च हरिदासो ध्रुवचरितं तथा न्यरूपयद्यथा तस्मिन्नेव क्षणे तच्चरितामृतं शृण्वतः शिवराजस्य मनसि 'यत्किंचिदपि अलौकिकं कृत्यं भगवत्कृपां विना कर्तुमशक्यं, भगवत्कृपा च केवलं भगवद्भक्तद्वारेणैव भवति' इति सिद्धान्तो बद्धमूलो बभूव. समाप्ते च हरिकीर्तने तं हरिदासं सत्कारपूर्वकं विसृज्य शिवराज एकाकी व्यचिन्तयत् 'इह ब्रह्माण्डेऽलौकिकसामर्थ्यशालिनी परमात्मशक्तिरस्तीत्यत्र न संशयः. अतएव तां वशीकृत्य साधुवरा मानवजातेरशक्यानि कार्याणि कुर्वन्ति. नहि केवलं तपस्यात एव ध्रुवस्याक्षय्यस्थानप्राप्तिरभविष्यद्यदि स भगवद्भक्तवरं नारदमुनिं नालप्स्यत? अहं चेदमलौकिकं कर्म कर्तुमिच्छामि. क्व चाक्रान्तसमस्तभारता दिल्लीश्वरप्रभृतयो यवनराजाः, क्व चाहं क्षुद्रोऽसहायश्च. तस्मात्समस्तभारतोद्धाररूपमलौकिकं कार्यं कर्तुमिच्छता मयाऽऽदौ सर्वसामर्थ्यशालिनी परमात्मशक्तिरात्मसात्करणीया. तथाकर्तुं च प्रथमतः कश्चन भगवद्भक्तो गुरुः करणीयः. मार्गदर्शकात् ऋते यथाऽरण्यस्थितस्य सैन्यस्य दुर्दशा जायते, यथा वा कर्णधारं विना

सागरगामिनी नौर्न नियतं स्थलं गच्छति. तथैव मार्गदर्शकस्य गुरोर्विनाऽपि मम स्थितिः स्यादिति.

एवं विचिन्तयति शिवराजे कश्चन दूतस्तुकारामसाधुवराणां राजधानीसमीपग्राम आगमनं निवेदयामास. राजा च प्रकृत्यैव हरिभक्तस्तादृशामपूर्वसाधुवराणां हरिकीर्तनं श्रोतुं मनश्चक्रे. यवना अपि शिवराजप्रतापसंतप्तास्तं बन्दीकर्तुमवांच्छन्. ते च गुप्तैश्चारैः श्रीशिवराजस्य नित्यं वृत्तं बुबुधिरे. अथास्मिन् समये ते कुतश्चिद्देशद्रोहिणो मानवराक्षसात् 'अद्य शिवराजस्तुकारामसाधुवराणां हरिकीर्तनं श्रोतुमागच्छति' इति वृत्तं निशम्य संजातानन्दा निभृतं स्थित्वा तुकारामाणां कीर्तनवेलां प्रतिपालयामासुः.

इतश्च शिवराजः स्नात्वा विरचितदैनिककृत्योऽश्वमारुह्य गृहीतसेवकद्वयो निभृतं तुकारामाणां हरिकीर्तनं श्रोतुं तं ग्रामं प्रतस्थे. ते च यवना अपि चारनिवेदितशिवराजागमनाः ससैन्यं निभृतमतिष्ठन्.

अथ तस्मिंल्लोकोत्तरे साधुपुरुषे प्रेम्णा हरिकीर्तनं कुर्वति सति सर्वेषु श्रोतृषु भजनानन्दमनुभवत्सु सत्सु सहसा तत्स्थानं यवनसैनिकैराक्रान्तं. निरुध्य च द्वारमार्गे गमनागमने प्रतिषिध्य ते यवनमुख्याः 'अन्तः शहाजीपुत्रो राजद्रोही शिवाजिरस्ति तं यद्यस्मभ्यं समर्पयत तदा युष्मान् वयं मोक्ष्यामः, अन्यथा सर्वमिदं स्थलं सर्वैर्जनैः सममेवाग्निसात्करिष्याम' इति जगदुः. तेषामिदं क्रूरं वचनं निशम्य सर्वेषु श्रोतृषु स्तिमितेषु सत्सु साधुवरांस्तुकारामान्विठ्ठलेशध्यानमग्नान्विलोक्य शिवराजस्तूष्णीं तिष्ठन् स्वभाग्यं निनिन्द.

अत्रान्तरे कश्चन शिवराजसदृशस्तस्मादेव जनसमूहादुत्थाय हस्त-

धृतनिष्कोषखङ्गस्तं यवनमुख्यं निर्भत्सयन् सहसाऽश्वमारुह्यागच्छत्. यवनमुख्योऽपि 'अयं शिवाजिर्गच्छति प्रतिबध्नीतैनं' इत्याक्रोशन् महता जवेनानुदधाव. सर्वेऽवशिष्टा अपि यवनाः स्वमुख्यस्य मार्गमेवान्वसरन्. तदेतत्सर्वं साक्षात्कुर्वन् शिवराजः केवलमस्य साधुरत्नस्य प्रार्थनया साक्षाद्विठ्ठलेशेन मदीयं रूपं धृत्वाऽहं रक्षित इति मन्वानस्तां चैतन्यशक्तिमात्मसात्कर्तुं गुरुशरणीकरणाय निश्चयमकरोत्.

निश्चिते गुरुकरणे शिवराजो भूयो मनस्यचिन्तयत्—भगवद्भक्तौ तु साम्प्रतं तुकारामा रामदासानप्यतीत्य वर्तन्ते. परन्तु रात्रिंदिवं केवलमीश्वरनामग्रहणासक्तेभ्यस्तेभ्यो न लौकिकं कार्यं भवेत्. यद्यपि तैर्वशीकृता परमात्मशक्तिरेवालौकिके भारतोद्धाररूपे कर्मणि मम सहायेत्यत्र न मम संशयः, परन्तु तां परमात्मशक्तिं वशीकृत्य साक्षाद्व्यवहारे समुपयुंजान एव गुरुर्ममाभीष्टः. तथाहि द्विविधा हरिभक्ताः. केचन हरिकीर्तनादिना लोकोद्धारं कुर्वन्तस्तां परमात्मशक्तिं वशीकृत्य तत्रैव रममाणाः संसारचिन्तायामुदासीनाः. अन्ये च परमात्मशक्तिं वशीकृत्य तां लोकोद्धाररूपे कर्मण्युपयुंजानाः. तत्राद्याः सर्वोत्कृष्टास्तथाऽन्या अपि. नात्राणीयानपि नीचोत्तमभावः. उभावपि लोकोद्धाररूपं कार्यं कुरुत एव. तत्त्वोपदेशादिना, साक्षात्स्वकर्मणा वा! परन्तु यो हि साक्षादेव जगदुद्धाररूपे कर्मणि प्रवृत्तस्तेन साक्षादेव जगति कर्मकारी गुरुः करणीयः. अयं च तयोर्भेदः शिष्यप्रकृतिभेदान्न स्वतः. अहं तु भारतभुवं पारतंत्र्यपंकात् साक्षादेवोद्धरिष्यन् रात्रिंदिवं प्रयते. योह्यस्मिन् कर्मणि साक्षादेव मम साहाय्यं कुर्यात् स एव मया गुरुः करणीयः. तुकारामसाधुवराश्च केवलं पंढरपुरे निवसन्तो हरिमेव

भजन्ते. कथं ते मां शत्रुवार्ताकथनेन वा नानास्थानवर्तिजनोद्बोधनेन वा साहाय्ययिष्यन्ति. श्रीरामदासस्वामिनस्तु प्रायः समस्तभारतवर्षस्थापितमठाः, अगणितशिष्यगणमंडिता अपारोपासनासामर्थ्येन वशीकृतलोकसंघाः शत्रुशासनोत्सुका वर्तन्ते. तत्तानेव शरणं गत्वा गुरून् करिष्यामीति.

एवं निश्चित्य स श्रीरामदासस्वामिनां दर्शनार्थं मतिं व्यधात्. श्रीसमर्था अपि सर्वमेतद्विजानन्तोऽपि न सहसा शिवराजाय दर्शनमदुः. वाचकाः ? यस्मिन्कर्मणि यावदौत्सुक्यं यावन्तश्च परिश्रमा अधिकास्तावत्तस्य महत्त्वमप्यधिकं. अनायासलभ्येषु जलवाय्वादिषु न कस्याऽपि तावानादरो यावान्वित्तव्ययेन लब्धे वस्तुनि. दृष्टं चैतत् भूयोभूयः पैतृकधनव्ययीकरणे निश्चिन्तेषु परिमितस्वकष्टार्जितधनव्ययेषु धनिकतनयेषु. अस्तु. श्रीरामदासस्वामिनां दर्शनार्थं शिवराजोऽरण्यादरण्यान्तरं पर्याटत् परन्तु दर्शनं नाभवत्. श्रीधरस्वामिनस्तु प्रायस्तेनैव समं श्रीसमर्थानां शोधार्थं व्यचरन्.

वाचकाः ? श्रीसमर्थान् द्रष्टुं शिवराजे दुर्गमारण्यानि समं श्रीधरस्वामिभिः पर्यटति सति स एकां ग्रामटिकामाययौ. तत्र च ज्वरितं शिवराजं वृक्षस्याधस्ताच्छाययित्वा श्रीधरस्वामिनः स्वयं ग्रामे भिक्षार्थमगच्छन्. शिवराजस्तु महता ज्वरेणाक्रान्तोऽक्षिणी निमील्य श्रीधरस्वामिभिः परिस्तृते कम्बले सुप्तोऽपि ज्वरदाहेनातितप्तो न निद्रां लेभे. अत्रान्तरे कस्यचिद्दीनं वचनं निशम्य समुद्घाटितलोचनो नद्या अपरतीरे केनचिद्बलोन्मत्तेन यवनेन पीड्यमानं दीनं ब्राह्मणमपश्यत्. तत्क्षण एव विस्मृतज्वरव्यथः स्वासिं निष्कोषीकृत्य तं मुखेन धारयन् महता जवेन वर्षाकालजलातिरेकाक्रान्तो-

भयकूलां नदीमुत्तीर्य ययौ. त्वरितमेव तं यवनं निहत्य ब्राह्मणं कलहकारणमपृच्छत्. स तु विप्रो भयेन कम्पमानो बद्धांजलिः— राजन्? अहं च मध्याह्नसंध्योपासनार्थं नदीतीरमागतः. संध्योपासनेऽर्धसमाप्त एवैष पापी यवनः सद्यो हताया गोश्चर्म गृहीत्वा समागतोऽत्र महता वेगेन तत्प्राक्षिपत्. तेन चोत्थितं जलं मदीयं गात्रमदूषयत्. अहं तु कोपाकुलोऽपि पीडाभीत्याऽमुं यवनं 'किमिति महता वेगेन त्वं गोचर्मात्र प्राक्षिपः' इत्यगदम्. क्षत्रियश्रेष्ठ? अनेन सात्विकवचनेनापि संजातकोपोऽयं नीचो यवनो मामेव थूत्कृत्य हस्तपादेनाताडयत्. अहं च प्रतीकारासमर्थः केवलं परमेश्वरमेवास्मात्संकटान्मोचयितुं प्रार्थयामास. करुणार्द्रेण जगच्चालकेनैव त्वं प्रेषित इत्यवदत्. शिवराजस्तु तं ब्राह्मणं नमस्कृत्य 'यदि त्वं परतीरमागमिष्यसि तदा दक्षिणामपि लप्स्यस' इत्युक्त्वैकेन हस्तेन गोभक्षकयवनशोणितदिग्धं खड्गं बिभ्रदपरेण हस्तेन प्लवमानः स्वस्थानमाजगाम.

वाचकाः? वर्षासु परिपूर्णाया नद्यास्तरणं नाम न सुकरं कर्म. तत्रापि ज्वरितेन. तथापि तच्छिवराजेनानुष्ठितमिति भवन्त एव विदांकुर्वन्तु यत् कियती वा धर्मप्रियता दीनदयालुता शिवराजस्यासीत्. ततश्च भिक्षां गृहीत्वा निवृत्ताः श्रीधरस्वामिनः क्लिन्नं परिधानवस्त्रमवलोक्य 'शिवराज? किमर्थं त्वमद्यास्नाः? ज्वरेण संतप्तोऽसि. प्रथमं शरीरपालनं ततोऽनुष्ठानादिकमित्यवदन्. शिवराजस्तु स्वात्मश्लाघाभीत्या सत्यं वृत्तमकथयन् 'घर्माक्रान्तं शरीरमतोऽहमस्नाम्' इति जगाद.

वाचकाः? ये खलु लौकिककीर्तिलाभायैव यत्किंचित्कार्यं

कुर्वन्ति ते च तत्कार्यविधानात्पूर्वमेव साक्रोशं लोकेभ्यः स्वकर्तव्यं निवेदयन्ते. परन्तु ये खलु सत्यं कार्यकारिणस्तेऽसंख्यानि कार्याणि कुर्वन्तोऽपि कदापि स्ववाचा तानि न कथयन्ति. सज्जनाः ? यद्यपि स्वकार्याण्यकृत्वैव विख्यापयन्तो जना यशोराशिं लभन्त इवेति दृश्यन्ते तथापि निभृतं सत्कार्यकारिणो यथा चिरस्थायिनं यशोराशिं लभन्ते न तथा त इति स्पष्टमेवेतिहासविदां विदितमेव. अस्तु.

एवंक्रमेण चिरं परीक्ष्य सन्तुष्टाः श्रीसमर्थाः शिवराजमनुग्रहीतुं पुरस्कर्तुं च मनश्चक्रुः. एकदा श्रीशिवराजश्चाफळमठमागतो रघुपतिमभिवंद्य श्रीसमर्थान्न वीक्ष्य खिन्नमनाः प्रतापगडदुर्गं जगाम. तत्र च श्रीसमर्थादर्शनदुःखितः स समर्थदर्शनं विनाऽन्नाग्रहणाय कृतशपथः सुष्वाप. रात्रौ च स्वप्ने जटाकलापमण्डितशिरसं, काषायवस्त्रांकितं, कौपीनधारिणं, मणिमालांकितहस्तकमलं, प्रसन्नवदनं, तपस्विनमपश्यत्. अब्रवीच्च स तपस्वी 'राजन् ? अहमस्मि रामदासः. त्वया खलु दर्शनार्थं प्रार्थितोऽत्रागतः. त्वं तु साक्षादेव शिवावतारोऽसि. तस्मात्स्वावतारकार्यं सनातनधर्मोद्धाररूपं कर्तव्यमेव. नात्रालसः करणीयः. अहं च यथाशक्ति तव साहाय्यं करिष्यामीति. ततश्च तस्मै विनताय शिवराजाय श्रीफलप्रसादं च दत्वा स तेजस्वी तपस्वी तिरोदधे. प्रभाते बुद्धः शिवराजः स्वाप्नं वृत्तं स्मरन् प्रत्यक्षं श्रीफलं पश्यन्विस्मितः सर्वमपि वृत्तं मात्रे श्रीजिजादेव्यै न्यवेदयत्. साऽपि तन्निशम्यात्मानं धन्याममन्यत.

अथ शिवराजो महाबलेश्वरक्षेत्रं गत्वा तत्र बहून् ब्राह्मणानभोजयत्. ब्राह्मणभोजनसन्नाहे प्रारब्ध एव श्रीसमर्थानां शिष्यः तेषां पत्रं गृहीत्वा तत्राजगाम. द्वारपालैश्च निवेदितागमनः

सत्वरं प्रवेशितश्च प्रणतिनम्राय शिवराजाय तत्पत्रं ददौ. शिवराजश्च तत्पत्रं शिरसा गृहीत्वाऽनुवाच्य च स्वमातरं पठित्वाऽश्रावयत्. वाचकाः ? अतिमधुरविन्यासं, स्पष्टतरकर्तव्योपदेशं, तत्पत्रमस्तीत्यत्र न संदेहः सारतश्चेदं तत्र—

तीर्थस्थानानि भ्रष्टानि । विप्रावासाश्च दूषिताः ।
समग्रा पृथिवी व्याप्ता । धर्मोऽगान्नामशेषताम् ॥ १ ॥
समग्रे भूतले नास्ति । यो धर्मं परिपालयेत् ।
देवधेनुद्विजादीनां । पालनायाब्रवीत्प्रभुः ॥ २ ॥
सज्जनान्तर्गतो रामः । कर्तुं तत्प्रेरयत्सतः ।
समस्ते भारते वर्षे । धर्मस्तु प्रलयं गतः ।
महाराष्ट्रे त्ववशिष्टोऽसौ । त्वत्साहाय्यमपेक्षते ॥ ३ ॥

वाचकाः ? श्रीसमर्थैस्तपस्याचरणानन्तरं समग्रार्यावर्तयात्रां विधाय यदवलोकितं तदत्र पत्रे स्पष्टमेव लिखितमस्ति. एतत्पत्रमेव तदानीं कीदृशी भारतवर्षस्य स्थितिरासीत्कियती विपत्तिर्वा प्रजानां, कीदृशाश्चाधर्माचारा इति सर्वं बोधयति. वाचकाः ? धन्यास्ते जना ये तादृशविपत्तिकालेऽपि स्वशीलरक्षणार्थं प्रायतन्त. अस्तु.

अथ तेन राज्ञा सादरं पृष्टः 'क्व सन्ति साम्प्रतं श्रीसमर्थचरणा' इति स शिष्यः श्रीसमर्थान् चाफळमठनिवासिनोऽकथयत्. राजा शिवश्च तद्दर्शनार्थं कृतनिश्चयो द्वितीयदिने चाफळमठं गत्वा रघुपतिं नमस्कृत्य मठे वर्तमानामक्कादेवीं 'क्व साम्प्रतं समर्थचरणाः' इति पप्रच्छ. अक्कादेवी तु 'श्रीसमर्थाः शिंगणवाडीग्रामे निवसन्ति अधुनैव युष्माभिः प्रेषितं प्रत्युत्तरं गृहीत्वा कल्याणस्वामिन इत एव गता' इति निवेदयामास. शिवराजश्च श्रीसमर्थदर्शनलोलुपः

'वयमपि तर्हि तत्रैव गच्छामः' इत्युक्त्वा प्रतस्थे. अक्कादेवी च– राजन्? दशघटिकासमयः संवृत्तः. श्रीरघुपतिप्रसादोऽपि सन्नद्ध एव. तत्प्रसादं गृहीत्वा गन्तुमर्हसि' इति व्यज्ञापयत्. शिवराजस्तु अद्यास्ति गुरुवासरस्तत्समर्थचरणारविन्ददर्शनं विनाऽन्नं न ग्रहीष्यामीति वदन्नेव प्रातिष्ठत. तं च प्रस्थितमवलोक्याक्कादेवी दिवाकरभट्टं मार्गदर्शनार्थं प्रेषयामास. मार्गे च संदेशवाहकस्थापनार्थं स्वमंत्रिणमादिश्य दिवाकरभट्टेन समं निष्क्रान्त एकाकी शिवराजः समर्थनिवासग्राममाजगाम. श्रीसमर्थाश्च समीप एवोद्याने वसन्तीति निशम्य संजातप्रमोदः सत्वरमेव तत्स्थलमाययौ. श्रीसमर्थाश्च तदानीमेव समागतैः कल्याणस्वामिभिरानीतं शिवराजप्रेषितं प्रत्युत्तरमपठन्. पठित्वा च तत् श्रीसमर्थाः कल्याणस्वामिनोऽवदन् कल्याण? शिवराजस्तु दर्शनार्थमतीव त्वरयते. मन्ये च सोऽद्यैवागमिष्यतीति. तदानीं च श्रीसमर्था विशालस्यौन्दुबरस्याधस्तात्तिष्ठन्तो दासबोधमलेखयन्. अत्रान्तरे दिवाकरभट्टः शिवराजश्च दृष्टिविषयावभूताम्. श्रीसमर्थाश्च कल्याणस्वामिनः प्रति–'कल्याण? कोऽयमागच्छति' इत्यपृच्छन्. ते च 'एषोऽग्रेसरो दिवाकर आगच्छति. अन्यं चाहं न विजानामि' इत्यवोचन्.

अथ दिवाकरभट्टः पुरोगत्वा प्रणिपत्य मुकुलितहस्तयुगलस्तस्थौ. पृष्टश्च श्रीसमर्थैः 'किमर्थमागत' इति 'शिवराजमहाराजा दर्शनार्थमागतास्तान् गृहीत्वा समागत' इत्यकथयत्. तदानीमेव शिवराजोऽपि श्रीसमर्थान्नमस्कृत्य नारिकेलफलं पुरतो निधाय विनयेन तस्थौ. श्रीसमर्थाश्च श्रीशिवराजस्य विशालं भालपट्टं, कमलदीर्घे अक्षिणी, शुकचंचुसमयहारिणीं नासिकां, परभोग्रतपश्चर्याद्योतकं शरीरमवलोक्य

सानन्दाः—शिवराज ? त्वं स्वपत्रेण सममेवागतः. अतीव त्वरा कृतेत्यवदन्. शिवराजोऽपि श्रीसमर्थानां प्रत्यक्षं तपस्यासामर्थ्यं लोकोद्धारतत्परतां च प्रेक्ष्य संजातप्रमोदातिरेकः सगद्गदं—श्रीचरणानामेवेयं कृपा, अहं चापराधीति जगाद. ततः श्रीसमर्थेषु—अस्माभिर्दर्शनं दत्वा प्रसादश्च वितीर्ण इति वदत्सु सत्सु शिवराजः खिन्नमनाः—सद्गुरो ? प्रसादश्च मया पूर्वमेव लब्धः. अयं च दासो युष्माकमनुग्रहेण संपादितात्मशक्तिरलौकिकं कार्यं कर्तुं वांछति. तदनुग्रहदानेनोद्धरणीयोऽयं जन इति साश्रु विज्ञापयामास. श्रीसमर्थाश्च शिवराजस्येमां विज्ञप्तिं निशम्य सस्मितवदनाः कल्याणस्वामिनां मुखं निरैक्षन्त. तेऽपि सत्वरमेव—राजा शिवः केवलं शिवावतारो लोकोद्धारार्थं प्रयतमानस्तस्मिन्नेव कर्मणि लोकसाहाय्यमपेक्षते. श्रीरघुपतेरप्ययमेवाऽभिप्रायोऽस्तीति जगदुः. श्रीसमर्थाश्चेदं कल्याणस्वामिनामनुकूलं वाक्यं निशम्य सानन्दाः 'तर्हि सन्नह्यतां' इत्याज्ञापयन्. कल्याणस्वामिभिः 'पूजासाहित्यमस्ति न वेति' पृष्टः शिवराजः शीघ्रमेवाश्वारोहं प्रेषयित्वा कृत्स्नं पूजासाहित्यमानयत्.

अथ दिवाकरभट्टे पूजां कथयति सति निवृत्तस्नानः शिवराजः श्रीसमर्थान् पूजयितुं प्रारभत. यथाविधि च श्रीसद्गुरून् पूजयित्वा वस्त्रालंकारादीन् समर्प्य सुवर्णदक्षिणां च विततार. निस्पृहाश्च श्रीसमर्थास्तत्सर्वमपि द्रव्यमितस्ततो वने चिक्षिपुः. किंचिदजापालकेभ्यश्चाऽदुः. ततः श्रीशिवराजं महामंत्रमुपदिश्य तत्त्वोपदेशं चक्रुः. राजा च सन्तुष्टान्तःकरणो धन्यमात्मानममन्यत. श्रीसमर्थाश्च शिवराजाय प्रसादत्वेन 'श्रीफलं, मुष्टिमात्रं मृत्तिकां, मुष्टि-

द्वयमात्रं वाजिमलं, मुष्टिचतुष्टयं पाषाणखण्डानि', प्रायच्छन्. तं प्रसादं गृहीत्वा प्रणिपत्य स्थितः स सदातनसांनिध्याय विज्ञापयामास. श्रीसमर्थाश्चेमां विज्ञप्तिं निशम्य प्रहसन्तः 'शिवराज ? वयं तु वनवासिनस्तपस्यापरास्त्वं तु क्षात्रधर्मानुयायी भारतोद्धारे रतोऽसि. तत्कथमावयोः सामानाधिकरण्यं स्यात्तथापि यदा त्वं स्मरिष्यसि तदानीमेवागमिष्यामीत्यूचुः.

अथ शिवराजमंत्रिगणैरपि पूजिताः श्रीसमर्थाः कल्याणस्वामिनोऽवदन् 'कल्याण ? एतैः समं शिवराजं चाफळमठं नीत्वा श्रीरघुपतेः प्रसादविशेषस्तस्मै समर्पणीयः. एतान् सर्वानपि दिनत्रयं मठे वासय. अहं च त्वरितमेवागमिष्यामीति. ततश्च ते भयंकरं क्रूरव्याघ्रादिभिः पशुभिरधिष्ठितं पर्वतमध्यं प्रविविशुः.

कल्याणस्वामिनः समं शिवराजप्रभृतिभिर्जनैश्चाफळमठमागताः श्रीरघुपतिं पूजयित्वा श्रीसमर्थाज्ञानुरूपां विज्ञप्तिं विधायावस्थिताः क्षणादेव श्रीरघुपतिमस्तकान्निपतितं जातीपुष्पगुच्छं गृहीत्वा शिवराजस्योष्णीषेऽस्थापयन्. ततश्च रघुनाथप्रसादे सन्नद्धे शिवराजः स्वोष्णीषं मस्तकादवतार्य सेवकाय दत्वा भोक्तुमुपाविशत्. स सेवकोऽपि तमुष्णीषं शुभ्रवस्त्रेण वेष्टयित्वाऽस्थापयत्. अथ समाप्तभोजनस्ताम्बूलं गृहीत्वोष्णीषं याचन् सेवकानीतं तमुष्णीषं मौक्तिकमण्डनमण्डितमपश्यत्. तस्मिन्पुष्पगुच्छे यानि जातीपुष्पाण्यासंस्तानि मौक्तिकानि संवृत्तानि. तमेनं चमत्कारं वीक्ष्य सर्वेऽपि विस्मिताः शिवराजं धन्यं मन्यन्ते स्म. शिवराजस्तु स्वारब्धे कार्ये मूर्तं यश इव तं मौक्तिकगुच्छं मन्यमानो महताऽदरेण तमुवाह. श्रीसमर्था अपि समागताः सर्वानपि शिवराजमंत्रिणः सेवाधर्ममुपादिशन्.

अथ मध्याह्नकाले प्रथमत आरभ्य सर्वं वृत्तं शिवराजः श्रीसमर्थेभ्यो न्यवेदयत्. तन्निशम्य परं सन्तुष्टाः श्रीसमर्थाः 'शिवराज ? त्वद्धस्तेनैव श्रीरामचन्द्रो म्लेच्छान्नाशयितुमिच्छतीति' जगदुः. चतुर्थदिवसे सर्वान् भोजयित्वा प्रत्यागमनायाज्ञापयन्. तदानीं शिवराजः साश्रुलोचनः पुनरपि नित्यदर्शनाय प्रार्थयामास. श्रीसमर्था अपि—वत्स ? शिव ? कार्यकाले संनिहित एवाहं. त्वं तु मद्दत्तं मंत्रबन्धनं प्रतिदिनं पूजयेत्यगादिषुः. ततश्च सर्वे गृहीतगमनानुज्ञाः श्रीसमर्थचरणानां गुणगणं वर्णयन्तः प्रतापगडदुर्गमागच्छन्. शिवराजश्च स्वगृहमागतः स्वमात्रे जिजादेव्यै सर्वं वृत्तं निवेद्य श्रीसमर्थैः प्रदत्तं प्रसादं दर्शयामास. साऽपि तादृशमलौकिकं प्रसादं वीक्ष्य विस्मिता जिजादेवी गूढमभिप्रायमपृच्छत्. शिवराजोऽपि—मातः ? मृत्तिकादानेन भूमिलाभः, अश्वमलदानेनाश्वबललाभः, पाषाणखण्डदानेन दुर्गलाभो भवेदिति श्रीसमर्थैर्द्योतितमित्यकथयत्.

वाचकाः ? एवंक्रमेण शिवराजः श्रीसमर्थानामनुग्रहं गृहीत्वा कृतकृत्यो महान्ति कार्याण्यकरोत्. येन च समस्तभारतवर्षे तदीयं यशो निष्प्रतिबंधं प्रससार. अकम्पन्त च विजापुराधीश्वरप्रभृतयो यवनराजाः. शिवराजोऽपि यथावकाशं श्रीसमर्थानां दर्शनं कृत्वा तैः कथितं ज्ञानामृतं निपीय विशुद्धान्तःकरणः परं ननन्द.

(२)

पाठकाः ? इत ऊर्ध्वं श्रीसमर्थचरणेषु श्रीशिवराजस्य कियती भक्तिरासीदिति कथाभिः कथयितुमारप्स्ये. सज्जनाः ? सार्वजनीनं

खल्विदं यत्—प्रीत्या प्रीतिर्वर्धते, इति. यो हि स्वस्मिंल्लोकानां प्रेम वांच्छति तेन प्रथमतो लोकेषु प्रेम करणीयं. यथा मूलधनादृते न वृद्धिर्भवति, तथैव नैसर्गिकस्य प्रेम्णोऽभावे प्रेमापि न वर्धत इत्यनुभवसिद्धं. यदा शिष्यः स्वयमेव गुरौ भक्त्यपरपर्यायं प्रेम दर्शयति तदैव कृतकृत्या गुरवोऽपि तमुपरि प्रेम कुर्वन्ति. अस्तु. प्रकृतमनुसरामः.

एकदा शिवराजो शयनागारं गतः केनचित्प्रेषितानि समुत्कृष्टान्याम्रफलान्यपश्यत्. तानि शकलीकृत्य राजपत्नीभिः स्थापितानि वीक्ष्य सकृदेव तस्य मनसि 'श्रीगुरुचरणेभ्योऽदत्वा कथं भक्षणीयानि' इति विचारः समुद्बभूव. तस्मिन्नेव क्षणे 'वत्स ? शिव ? समुद्घाटय द्वारं' इति ध्वनिरजायत. इमं च समर्थानां ध्वनिं प्रत्यभिज्ञाय सानन्दं शिवराजेन द्वारे समुद्घाटिते सति श्रीसमर्थाः स्मेरवदनकमला अन्तः प्राविशन्. सर्वैर्नमस्कृता यथासनमुपविष्टाः 'किमर्थं वयं स्मृताः' इति शिवराजमपृच्छन्. सोऽपि सविनयं—अत्युत्तमानीमान्याम्रफलानि कथं गुरुचरणान्विहाय भक्षणीयानीति विचारयता मया स्मृता गुरुचरणाः, सोऽयमपराधो दासस्य क्षन्तव्य इत्युक्त्वा तेषामाम्रफलानां खण्डानि स्वहस्तेन श्रीसमर्थेभ्यः प्रायच्छत्. श्रीसमर्था अपि सर्वैः समं तानि फलानि भक्षयित्वा कुशलमापृच्छ्य चाफळमठजिगमिषां प्रादर्शयन्. राजा तु विस्मितः 'गुरुचरणाः ? मध्यरात्रः संवृत्तः, मार्गस्तु भयंकरैर्व्याघ्रादिभिर्वन्यैः पशुभिराक्रान्तः, तदत्रैव स्थातव्यं. यदि तथा कर्तुं न शक्यते तदा करदीपिकाः प्रज्वाल्य सैनिकरक्षिता गच्छतेत्यवदत्. श्रीसमर्थाश्च तद्वचनं निशम्य हसन्तो 'राजन् ? केन मार्गेणाहं चाफळमठं

गच्छामीति द्रष्टुमिच्छसि चेदागच्छेत्युक्त्वा प्रतापगडदुर्गस्योच्चैस्तरे प्राकारे निहितपादाग्राः क्षणादेवादृश्यतां लेभिरे. शिवराजश्च समं स्वपत्नीभिः केवलं दिव्यं तेजः पश्यन्विस्मित आत्मानं तादृशदिव्यगुरुलाभेन धन्यं मन्यमानः शयनागारमागत्य सुखेन सुष्वाप.

श्रीसमर्थाश्च शिवराजं महामंत्रजपानुष्ठानेन विशुद्धान्तःकरणं पश्यन्तः केनचित्प्रसंगेन तत्त्वोपदेशं कर्तुमैच्छन्. यतस्ते तत्त्वोपदेशं विना नालौकिककार्यकरणे सामर्थ्यमिति सम्यगजानन्. एवंस्थिते श्रीसमर्थानां मातरि दिवं गतायां शिवराजः समर्थदर्शनार्थमाययौ. कुशलप्रश्नेषु वृत्तेषु राजा श्रीसमर्थान् प्रति 'जन्मनः किंमूलको लाभः' इति पप्रच्छ. श्रीसमर्था अपि 'अयमेव समयस्तत्त्वोपदेशस्य' इति मन्यमानाः—वत्स ? शिव ? जन्मलाभस्य मूलं कारणं वासनाः. ताश्चानादिमोहमूलिकाः. एताश्च वासना विषयोपभोगेन वर्धमाना अतिविशालपाशा इव निबध्नन्ति जीवं. एवमगणितजन्मचक्रेषु भ्रमन्नपि विविधदुःखराशीननुभवन्नपि वासनाक्षयं न जीवो लभते. अथ पूर्वपुण्यसंचयाद्वा भोगभोगाद्वा कस्यचिज्जीवस्य वासनासु द्वेषो जायते. जाते द्वेषे ताः परिहर्तुं स गुरुमेव शरणं गच्छति. गुरुश्च तत्त्वोपदेशपुरःसरं साधनादि कथयित्वा तस्य दुःखं दूरीकरोति. वत्स ? शिवराज ? अत्र प्राथमिकश्चाभ्यासः—यतो यतो वासनोदेति ततः सा परिवर्त्य स्वावासं प्रापणीया. अयं चाभ्यासः सततं करणीयो येन वासनानां समूलं क्षयो भविष्यति. नष्टासु वासुनासु जन्मलाभो न भवति. अतएवायं जीवो ब्रह्माभिन्नोऽपि तादृशक्षुद्रवासनाक्रान्तो न लभते तादृशीं शक्तिं. प्रत्युत यो हि जीवः स्ववासनाः क्रमेण न्यूनीकरोति स एवालौकिकं कार्यं

कर्तुं प्रभवति. यस्तु निःशेषीकृतनिखिलवासनाजालः स तादृशमेव कार्यं करोति यादृशं नारायणः स्वयमेवावतीर्य करोति. तस्माद्वत्स ? शिवराज ? त्वदारब्धस्यालौकिकस्य कार्यस्य सिध्यै यथाशक्ति स्वार्थमूलिकां वासनां न्यूनीकुरु इति. तच्चामृतोपमं श्रीसमर्थानां वचनं निशम्य संजातोपरतिः शिवराजः—सद्गुरुचरणाः ? केवलं मम वासनाऽस्मिन् करवालेऽस्ति. तत्तमपि युष्मच्चरणारविन्दयोरुपायनीकृत्य निर्वासनो भवामीत्यभिधाय तं भवानीदत्तं खड्गं श्रीसमर्थचरणयोरर्पयामास.

श्रीसमर्थास्तु—वत्स ? शिव ? अनेन खड्गसमर्पणमिषेण सर्वमेव वासनाजालं मह्यं समर्पितवानसि. अनेन चाहं परं प्रीतोऽस्मि. परन्त्वेनमेव खड्गं प्रसादरूपेण तुभ्यमहं ददामि. दीनत्राणे धर्मरक्षणे गोब्राह्मणप्रतिपालने चोपयोजयैनम्. वत्स! शिवराज! नहि खलु साक्षात्कृत्य परमात्मानं वासनाचक्रं विनाश्य केवलं पाषाणवदवस्थानम्. तथासति तत्त्वज्ञानिभ्यो जगतः क उपकारः. यदि तत्त्वज्ञानिनः केवलं जडवत्तिष्ठेयुस्तदा दीनान् को वा पालयेत्. को वा भगवद्वतं—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ॥

इति रक्षेत्. परमात्मा तु स्वाभिन्ने भक्ते यथा विश्वसिति न तथा साभिप्रायोपासके. तद्वत्स ? रात्रिंदिवं यथाशक्ति दीनरक्षणाय धर्मपालनाय यतस्व. भगवानयोध्याधीशः सर्वं मनोरथं सफलीकुर्वंस्तव सहायो भूयादित्युक्त्वा श्रीफलेन समं तं खड्गं शिवराजाय प्रायच्छन्. राजा शिवस्तु तमलौकिकमुपदेशं निशम्य नूतन इव नितरामौत्सुक्यं दधार.

एकदा विजापुराधीशेन शिवराजशासनार्थं महान् बलाढ्योऽफ-जुलखाननामा सेनापतिः प्रेषितः. स तु सेनापतिः सुव्यवस्थितया सुशिक्षितया यवनसेनया समं शिवराजराज्यं प्रविश्य प्रसिद्धानि देवालयानि सहस्रशो ब्राह्मणांस्तथाऽर्यमहिला अदूषयत्. तस्य भीत्या सर्वेऽपि प्रजाजना राजधानीमाजग्मुः. सेयं वार्ता तत्र तत्र नियुक्तैरधिकारिभिः शिवराजाय निवेदिता. शिवराजोऽपि प्रजा-संकटोद्विग्नमना द्विर्गुरुवासरे दर्शनार्थं गतोऽपि श्रीसमर्थानां दर्शनं नैव लेभे. तथापि स—यत्किंचिदपि भवतु परन्तु गुरुपादेभ्योऽनि-वेद्य नाहं किंचित्करिष्यामीति निश्चिकाय. मंत्रिवरास्तु—श्रीसमर्था वनवासिनो रामध्यानतत्पराः किमर्थं संसारिजनोचितानि कर्माणि पश्येयुः! तदस्मिन् राजकार्ये वृथा कालक्षेपेण नः प्रजानां नाशो जायत इत्यब्रुवन्. परन्तु शिवराजः स्वनिश्चयं न मुमोच.

अथ चिन्ताक्रान्तेषु सर्वेषु शिवराजप्रभृतिषु तूष्णींस्थितेषु सत्सु अकस्माद्रामनामगर्जनाऽश्रूयत. त्वरया सर्वेषूत्थितानुत्थि-तेषु सत्सु श्रीसमर्थचरणाः ससंभ्रममागत्य स्वासनमलंचक्रुः. वृत्ते प्रणिपातादिविधौ श्रीसमर्थाश्चिन्तातुरं शिवराजं वीक्ष्य 'वत्स! शिवराज! वयं चारण्यवासिनः कदा कुत्र वा गमिष्याम इत्यत्र नास्ति निश्चयः. तत्त्वमवश्यंकरणीये राजकार्ये किमिति मामपेक्षसे, इति जगदुः. राजा च सत्वरमेव 'गुरुमाता मां विहाय यत्र कुत्रापि पर्यटतीति कल्पयितुं नाहं प्रभवामि. गुरु-चरणाः? देहेन यत्र कुत्रापि संचरन्ती दूरस्थाऽपि धेनुर्मनसा वत्सस्य संनिहितैवेति प्रत्युत्तरमदात्.

वाचकाः! ईदृशीं गुरुनिष्ठामवलोक्य सन्तुष्टाः श्रीसमर्थचरणाः

'अद्य सायं काले स्नात्वा भवानीं यथाविधि संपूज्य स्वसंकटं निवेद्य पुरस्तात्तिष्ठ. सा च भगवती त्वच्छरीरं प्रविश्य यथा वदेत्तथा त्वं कुरु' इति कथयित्वा स्वनिवासं जग्मुः. ततश्च शिवराजोऽपि देवीकथितेन मार्गेण तं यवनसेनापतिं पराजिग्ये.

सज्जनाः! इदमेकमेवोदाहरणं श्रीशिवराजस्य श्रीसमर्थेषु कियती भक्तिरासीदित्यत्र पर्याप्तं. अस्तु.

एकदा श्रीसमर्था मनसि 'शिवराजस्य भक्तिः परीक्षणीयेति विचारमकुर्वन्. परीक्षा खलु निकषः सुवर्णस्येव भक्तेरुत्तमाधमत्वयोः. यो हि परीक्षायामेव स्थिरभक्तिभावः स एवात्मीय इति सिद्धान्तः. अन्यथा सर्वेऽपि स्वास्थ्यसमये समागता विपत्तिकालेऽपयान्ति. तच्च परीक्षावृत्तमित्थम्.

एकदा श्रीशिवराजः प्रतापगडदुर्गान्निर्गत्य महाबलेश्वरक्षेत्रमगच्छत्. तत्समीप एवारण्ये श्रीसमर्था अपि सन्तीति श्रुत्वा तद्दर्शनार्थं वनाद्वनान्तरं पर्याटत्. एवं पर्यटतः शिवराजस्य सायंकालः संवृत्तः, परन्तु श्रीसमर्थानां दर्शनं नाभूत्. एवमेव द्वितीयो दिवसोऽपि व्यतीतः. श्रीशिवराजश्चैकाकी श्रीसमर्थदर्शनेच्छुरितस्ततः क्रूरव्याघ्रादिनिवासमभितः परिबभ्राम.

अत्रान्तरे शिवराजो दूरवर्तिनि निकुंजे कस्याऽपि रोगार्तस्यातिकरुणं विलापमश्रृणोत्. दीनपालकः स शिवराजस्तत्क्षण एव धावंस्तस्मिन्निकुंजेऽनियतं भूमौ लुठतः श्रीसमर्थान् वीक्ष्य परं दुःखाकुलोऽभूत्. शिवराजश्च त्वरितमेवाग्रे भूत्वा 'गुरुचरणाः? किंनिमित्तमियमवस्था युष्माकं संवृत्ता? कोऽसौ रोगः? केनौषधेन शाम्यति? इति पप्रच्छ. श्रीसमर्थास्तु—अरे शिवराज! किं कथ-

यामि. तात? एष दुःसह उदररोगः, एष कदापि न शाम्यति.' इति कथमपि महता कष्टेनावदन्. अथ दुःखाकुले साश्रुलोचने शिवराजे 'गुरो? यद्यस्य किंचिदुपशामकमौषधं स्यात्तदा कथनीयं, अहं च तत्संपादयामीति' वदति सति, श्रीसमर्थाः 'हा हन्त वत्स शिवराज! अस्त्येक उपायः, परन्तु सोऽसत्सम एव. यदि तु तत्कथने तवाग्रह एव चेत् केवलं व्याघ्रीदुग्धमेवात्रौषधत्वेनोपयुज्यते नान्यत्किमपी'त्यवादिषुः. श्रुत्वा चेदं वाक्यं व्याघ्रीदुग्धानयनप्रवृत्तं शिवराजं श्रीसमर्थास्तथैव करुणया वाचाऽब्रुवन्—राजन्! शिवराज! अहमस्मि भगवद्भक्तः, केवलं शरीरयात्रालाभार्थमेव विचरामि. बहूनां पालयितुस्तव प्राणा असाधारणा एव. तानमूल्यान्न मम कृते त्वं त्यक्तुमर्हसीति. तदिदं श्रीसमर्थानां वाक्यमश्रुत्वैव भाण्डं गृहीत्वा वने संचरति श्रीसीतानाथ इव श्रीशिवराजेऽतिनिबिडस्थानाद्द्वौ व्याघ्रशिशू पुरस्तादागच्छताम्. तौ वीक्ष्य जातानन्दः स शिवराजस्तत्स्थलं प्रविश्य व्याघ्रीमन्वैष्यत्. अचिरादेव बालकरक्षणाय सहसा जवेनागच्छन्ती क्रोधातिरेकरक्तनयनाऽऽक्रोशन्ती सा व्याघ्री शिवराजं कण्ठदेशेऽगृह्णात्. शिवराजस्तु तेन हिंस्रपशुनाऽऽक्रान्तोऽपि नाबिभेत्.

अथ निरुद्धेऽपि कण्ठदेशे शिवराजः स्वस्थमनाः—मातर्व्याघ्रि? गुरुचरणरोगनिवृत्त्यर्थं त्वदीयं दुग्धमाहर्तुमहमत्रागतो नतु त्वदीयबालकनयनार्थं. तत्प्रसीद. देहि त्वं दुग्धमिति सधैर्यमुवाच. ततश्च तस्मिन्नेव क्षणे विस्मृतस्वभावा सा व्याघ्री परमप्रीत्या शिवराजस्य गात्रमलेढ्. शिवराजोपि यथेच्छं धेनुवत्तां व्याघ्रीं दुग्ध्वा पर्याप्तं दुग्धं लेभे. तदानीमेव स 'धन्योऽसि वत्स!

शिवराज! धन्योऽसि! सत्यं तव गुरौ निष्ठा. यतस्त्वया गुरुसेवार्थं परमप्रियाः प्राणास्तृणीकृताः. अनेन भक्त्यतिरेकेण सत्यमेव त्वं श्रीगुरुप्रीतेः परमं पात्रं संवृत्तोऽसि' इति केनचित्सहासमुच्चारितान् शब्दानशृणोत्. विस्मितश्च निवर्तितमुखः पुरोवर्तिन आनन्दातिरेकसमुल्लसन्मुखकमलान् श्रीसमर्थान् वीक्ष्य साष्टांगं प्रणिपतन्—'गुरुचरणाः? स भयंकर उदररोग प्रशान्तः किं' इति पप्रच्छ. श्रीसमर्थाश्च शिवराजस्येमं प्रश्नं निशम्य हसन्तः—वत्स! शिवराज! त्वादृशेषु शिष्येषु सत्सु कथं स उदररोगस्तिष्ठेत्? वत्स! नासीत्स रोगः किंतु मयैव केवलं तव परीक्षार्थं तथा समाचरितम्. अद्यप्रभृति त्वं खलु मम निर्विकारप्रीतेः पात्रं संजातोऽसि' इति प्रत्यूचुः. राजा शिवश्च तद्वचनमाकर्ण्य कियती मुदमलभतेति सुज्ञैर्वाचकैरेवावधारणीयम्.

( ३ )

एवंक्रमेण परीक्ष्य निर्णीतभक्तौ शिवराजे श्रीसमर्थानां प्रीतिर्निरतिशयाऽभवत्. वाचकाः! यथा यथा हि खलु भेदो नश्यति तथा तथा प्रीतिस्तत्र संवर्धत इत्यनुभवः सर्वेषां. एनमनुभवमनुसृत्यैव श्रीसमर्थानां प्रीतिः शिवराजे कियत्यासीदिति प्रदर्शयितुं काश्चिदहं कथा लिखामि.

एकदा शिवराजः कुत्रचित् कार्यार्थं गच्छन् श्रीरामदासस्वामिनां दर्शनार्थमागच्छत्. श्रीसमर्थाश्च तदानीं महारण्ये पर्वतमध्येऽवसन्. तान्प्रणिपत्य स्थिते शिवराजे ते तमवदन्. वत्स? शिवराज? किमिति म्लानमुखो भासि? इति. नास्ति कारणविशेषः केवलं निदाघसंतापेन तृषाऽर्तोहमिति स प्रत्युवाच. श्रीसमर्थाश्च

हसन्तः 'यो हि नारायणः सर्वेभ्योऽन्नजलादिकं प्रत्यहं वितरति स तुभ्यमपि दद्यादिति' ब्रुवाणाः काष्ठदण्डेन समीपं पाषाणमपसारयामासुः. तस्मिन्नेव क्षणे प्रससार तस्मात्स्थानाच्छीतमधुरो जलनिर्झरः. राजा च स्वसेवकाच्छर्करां गृहीत्वा तदुदकं पीत्वा समतुष्यत्.

शिवराजः श्रीसमर्थानां नित्यं सांनिध्यमैच्छत्. तदनुरूपं विज्ञप्ता अपि श्रीसमर्थास्तदिच्छां न सफलयामासुः. तथापि शिवराजोऽनिराशः पुनरपि स्वाश्रयान्नातिदूरे परळीदुर्गे निवासार्थं प्रार्थयत. श्रीसमर्था अपि शिवराजभक्त्या वशीकृतास्तां प्रार्थनामंगीचक्रुः. शीघ्रमेव च ते परळीदुर्गमागत्यावसन्. तस्य दुर्गस्य नामापि 'सज्जनगड' इति नूतनमेवास्थापयन्.

वाचकाः ! एवंक्रमेण निरपेक्षा वनवासिनोऽपि श्रीसमर्थाः केवलं शिवराजेन स्वभक्त्या वशीकृत्य स्वसंनिधौ स्थापिताः. पश्यत भक्तेरलौकिकीं शक्तिं ! अस्तु.

एकदा शिवराजो नियमानुसारेण गुरुवासरे श्रीसमर्थानां दर्शनार्थमागच्छत्. पृष्टकुशलश्च 'मम तातपादाः शहाजीराजाः समं मन्मातृभिर्युष्मद्दर्शनार्थमागन्तुमनुज्ञां वांच्छन्ति' इति निवेदयामास. श्रीसमर्था अपि तां विज्ञप्तिं सानन्दं स्वीचक्रुः.

अथ लब्ध्वा श्रीसमर्थचरणानामनुज्ञां दर्शनार्थमागताः श्रीशिवराजस्य तातचरणाः श्रीशहाजीराजास्तथा मातरो जिजादेवीतुकादेवीप्रभृतयः श्रीसमर्थान्विधिवदपूजयन्. अन्ते च श्रीशहाजीराजा मुकुलितहस्तकमलः श्रीसमर्थानुद्दिश्य–'गुरुचरणाः ? अहं च विजापुराधिपस्य सेवको भूत्वा तत्रैव निवसामि. एष च शिव

इतो नानाविधानि कृत्यानि करोति. अद्याप्येष बालस्तत्समये समये योग्यमार्गदर्शनेनानुग्राह्य' इति व्यज्ञापयन्.

श्रीसमर्थाश्चेदं शहाजीराजानां गौरवभक्तिपरिपूर्णं भाषणं निशम्य सन्तुष्टाः 'राजन्! एष शिवराजः केवलं दुर्मदानां यवनानां शासनार्थं धरणितलमवतीर्णस्त्वत्तो जिजादेव्यां समुत्पन्नः साक्षाच्छिव एव. एष च परमभक्तिमान् सीतानाथकृपयाऽचिरादेव सर्वं भारतवर्षं समुद्धरन् कृत्स्नं धर्मं समुज्ज्वालयन् गोब्राह्मणान् प्रतिपालयिष्यतीत्यवादिषुः. शहाजीराजा अपि तद्भाषणं नामाशीर्वचनमेव मन्यमानाः समर्थानुज्ञया स्वावासमागताः स्वस्थानमयासिषुः. अथ क्रमेण प्रवृद्धे शिवराजराज्ये श्रीसमर्थाः शिवराजं राज्याभिषेकविधानार्थमाज्ञापयन्. देवी भवान्यप्यस्मिन्नर्थेऽनुकूला बभूव. काशीनिवासी गागाभट्टनामा सर्वशास्त्रपारंगतो विद्वान् पैठणनगरमधिवसति तमानीय राज्याभिषेकः करणीय इति श्रीसमर्थैः समाज्ञप्तः शिवराजो गागाभट्टमानेतुं स्वमंत्रिणः प्रैषयत्. सोऽपि विद्वन्मुकुटमणिः शिवराजं पुण्यश्लोकं मन्वानस्तन्निमंत्रणमंगीकृत्य राजधानीं राजगडदुर्गमाजगाम. विद्वदादरशीलो राजा शिवः सादरं प्रत्युद्गतस्तं पूजयित्वा स्वावासमानयत्. अथ तौ च मिलित्वा श्रीसमर्थदर्शनार्थं सज्जनगडदुर्गं गतौ श्रीसमर्थान् प्रत्यभिववन्दाते.

श्रीसमर्थाश्च तं पण्डितप्रवरं गागाभट्टमभिनंद्यावोचन्—पण्डितप्रवराः? सुमुहूर्ते शिवराजोऽभिषेचनीयः. सर्वे विधयो यथाशास्त्रं कर्तव्याः. नैष शिवराजस्याभिषेकः किंतु परकीयैर्यवनैर्दासीकृतायाः स्वातंत्र्यदेव्याः. येयं भारतस्वातंत्र्यलक्ष्मीः परकीयैर्महंमदीयैरपहृताऽसीत्तां च महात्मा शिवराजो मोचयित्वा पुनरपि सिंहासने

स्थापयति. सैषा यथा चिरं सिंहासनासीना स्यात्तथा युष्माभिर्यतनीयमिति. तामेनामाज्ञामंगीकृत्य गागाभट्टः समं शिवराजेन राज्याभिषेकवेलां निरणयत्.

ततश्च—श्रीशिवराजः सर्वमितिवृत्तं निवेदयितुं श्रीसमर्थानां सन्निधिमागतस्तानित्थं विज्ञापयामास. गुरुपादाः ? दासस्य सर्वे मनोरथाः परिपूर्णकल्पा एव. युष्मच्चरणकृपया म्लेच्छकंटकनिवारणरूपा श्रीरघुपतिसेवाऽपि यथाशक्ति कृतैव. परन्त्वद्यापि एकः संकल्पोऽवशिष्टस्तं च पूरयितुं गुरुचरणा एव समर्था इति. श्रीसमर्थैश्च तन्निवेदनार्थमाज्ञप्तः 'यदीयकृपयेदं सर्वं राज्यं लब्धं तानेव प्रथमतो राजासने स्थापयितुमिच्छामि. तदर्थं च चिरं धृतोऽपि एष जटाकलापोऽवतारणीय एव' इति कथयामास.

इमामपूर्वां विज्ञप्तिं निशम्य परं विस्मिताः श्रीसमर्थाः—'शिवराज ! किं ममानुष्ठानविरोधेन त्वया लब्धं. वृथैव नित्यक्रमविरोधः कृतः. अस्तु. यद्येतावतैव ते संतोषस्तदा स्वीकृता तव प्रार्थनेति जगदुः. तामनुज्ञां समाकर्ण्य संतुष्टः शिवराजः प्रथमं चाफळमठमागत्य श्रीसमर्थचरणान् यथाशास्त्रं सर्वैराजोपचारैर्भूषणैश्चालंकृतान् सिंहासने स्थापयित्वा स्वयं तान् सेवक इवासेवत. ततश्च तेषामनुज्ञया स्वयं राजधानीमागत्य स्वात्मानमप्यभिषेचयामास.

वाचकाः ! सर्वेषु कर्तव्येषु साधूनां स्वव्रतपालनमभीष्टतममिति सार्वजनीनम्. एवंस्थिते श्रीसमर्थैः केवलं श्रीशिवराजस्य सन्तोषार्थं स्वव्रतं खण्डयित्वाऽपि राजोचिताः सर्वे राजभोगाः स्वीकृताः. क्व खलु नित्यब्रह्मचारिणः श्रीसमर्थाः, क्व च तादृशा विषयिजनोचिता राजभोगाः, तथापि केवलं शिवराजसन्तोषार्थमेव तैः स्वी-

कृता इति कियती प्रीतिः श्रीसमर्थानां शिवराज आसीदिति स्पष्टं दर्शयति.

एकदा च शिवराजो नित्यनियमानुसारेण गुरुवासरे श्रीसमर्थदर्शनार्थमागतस्तस्मिन्दिने पारमार्थिकीमेव चर्चामकरोत्. श्रीसमर्था अपि सर्वमेव तत्त्वज्ञानं तथोपदिदिशुर्येन शिवराजः समाधौ मग्नो महान्तमानन्दमन्वभूत्. 'एतादृशमेवानन्दमहं सर्वदा वांच्छामि' इति श्रीशिवराजेन विज्ञप्ताः श्रीसमर्थचरणाः 'तथैव भविष्यति' इति प्रत्युत्तरयामासुः. शिवराजश्च तस्मिन्दिने श्रीसमर्थमूर्तिं सादरं तथा न्यरूपयद्येन शंकिताः श्रीसमर्था अपि 'वत्स ! शिव ! किमद्य मामेवमवलोकयसि ?' इति प्रपच्छुः. श्रीसमर्थैश्चैवं पृष्टमात्र एव राजा शिवः साक्रोशमरोदीत्. श्रीसमर्था अपि विदितभावाः सहसा पुरोगत्वा तं शोकाकुलं शिवराजं पुत्रं मातेव स्वक्रोडे चक्रुः, उपादिशंश्च 'राजन् ! आसक्तिं विहाय स्थातव्यं' इति. राजाऽपि प्रकृतिमापन्नः साष्टांगं प्रणिपत्य गृहीतानुज्ञो महता कष्टेन स्वराजधानीं ययौ.

अथ शिवराजः स्वावतारसमाप्तिकालं समीपमागतं जानन् सर्वं कालं सत्कर्माचरणेन यापयामास. सर्वदैव हरिकीर्तनमश्रृणोत्. ततश्च प्राप्ते प्रयाणदिने राजा शिवः परीक्षिदिव नानाविधानि दानानि ब्राह्मणेभ्यो वितीर्य गोदानं भूमिदानं च विधाय कृतप्रायोपवेशो भजनं शृण्वन्नेव रामशब्दमुच्चार्य प्राणाञ्जहौ. सर्वे च जनाः शोकसागरे न्यमज्जन्. तदिदं वृत्तं सेवकमुखान्निशम्य साश्रुनयनाः श्रीसमर्थाः सहसाऽन्तर्गृहं प्राविशन्. तद्वीक्ष्याक्कादेवी जगाद— 'कस्यापि मायापाशः श्रीसमर्थान् बध्नातुं न शक्नोति परन्तु शिवरा-

जस्य मायापाशस्तानपि वशीचकार' इति. उद्धवस्वामिनोऽपि 'किमत्राश्चर्यं ! श्रीसमर्थानामवतार एव श्रीशिवराजं पुरस्कृत्य सनातनधर्मोद्धारार्थमासीत्. साम्प्रतं तु पुण्यश्लोके शिवराजे दिवंगते श्रीसमर्था अपि शीघ्रमेव स्वावतारं समापयिष्यन्तीति मन्ये, इत्यवोचन्.

वाचकाः ! निरिच्छानां तत्वज्ञानिनां श्रीसमर्थानामपि नेत्रबिन्दवो यदर्थं पेतुः स पुण्यश्लोकः शिवराजः कथमासीत्तस्मिंस्तेषां श्रीसमर्थानां च प्रीतिः कियत्यासीदिति वक्तुं नास्त्यावश्यकता. धन्यः स पुण्यश्लोको युधिष्ठिरादिसमः शिवराजः, धन्याश्च ते श्रीसमर्थाः, उभावपि अलौकिकावेवेति मन्ये.

( ४ )

सज्जनाः ? न केवलं श्रीसमर्थाः शिवराजं प्रति तत्त्वोपदेशं वा व्यवहारशिक्षां वोपदिशन् किंतु वृद्धौ यानि बाधकानि गर्वादीनि तेभ्योऽपि शिवराजमरक्षन्. तदेतत्कानिचिदुदाहरणान्युदाहृत्य निवेदयामि.

एकदा हुकेरीप्रान्ते सामानगडनामकं महादुर्गं श्रीशिवराजेन विरचयितुं प्रारब्धं. तत्र दुर्गस्य पुरस्तादतिप्राचीनं श्रीमारुतेर्देवालयमस्ति. तत आरभ्य दुर्गपर्यन्तं राजमार्गः करणीय इति मनीषया शिवराजो महति प्रत्यूष एव तत्राजगाम. तत्र च सहस्रशो मनुष्यान् दुर्गरचनासक्तान् वीक्ष्य शिवराजो मनस्यकरोत्—'अहं ह्येतावतः सहस्रशो मानवानन्नदानेन पालयामि. धन्योऽहमस्मि' इति.

एतस्मिन्विचारे प्रादुर्भूते सति तत्र श्रीसमर्थचरणा अकस्मादेवागच्छन्. स्वीकृत्य च शिवराजप्रणिपातादिकं महता संतोषेण सर्वं दुर्गकर्म निरीक्षमाणा अकस्मादेव राजमार्गमध्ये बृहन्तं पाषाणमपश्यन्. तैश्च शकलीकर्तुमादिष्टः शिवराजः पाषाणदारकानाहूय तं पाषाणं शकलीकर्तुमाज्ञापयत्. शकलीकृते तस्मिन्नन्तर्विद्यमानं सजलं मण्डूकं वीक्ष्य हसन्तः श्रीसमर्थाः 'शिवराज ? त्वं तु सर्वान् पालयसि. न त्वदन्यः कोपि जीवानां पालयिता. त्वं तु न केवलं मानवानेव पालयसि किंतु मण्डूकादीन् क्षुद्रान् जन्तूनपि' इत्यगादिषुः. तदेतत्साभिप्रायं श्रीसमर्थानां वचनं निशम्य संजातोपतापः स शिवराजः श्रीसमर्थान् प्रणिपत्य 'दासस्यायमपराधः क्षन्तव्यः' इति विज्ञापयामास. दयासागराः श्रीसमर्थाः 'क्षमां कर्तुमेवाहमत्रागतः. राजन् ? त्वादृशा नरपुंगवा यदि दुरभिमानिनः स्युस्तदा कथं खलु जगदुद्धाररूपं दुर्घटं कर्म जायेत ? ये खलु गर्वभारभुग्ना न ते यशस्विनो भवन्ति. तस्माद्यः खलु लोकोत्तरं कार्यं कर्तुमिच्छति तेन कदापि वृथाऽभिमानो मनसि न करणीयः. शिवराज ! त्वदीयकोशाध्यक्षो यदि मन्येत अहमेव सर्वेभ्यो मनुष्येभ्योऽन्नं वितरामि इति तदा तत्किं न्याय्यं भवेत् ? एवमेव त्वं हि रघुपतेर्विश्वासपात्रं कोशाध्यक्षः. त्वद्धस्तेन स चराचरपालकः सर्वेभ्योऽन्नं ददाति' इत्युपादिशन्.

वाचकाः ! अमूल्योऽयमुपदेशः ! वयं च प्रतिदिनं पश्यामो यत् किंचित्कार्यकारिणोऽपि अखर्वगर्वभारभुग्ना मोहान्धीकृतसदसद्विवेकबुद्धय उत्तमा मानवा अपि स्वकर्तव्यानि मुंचन्तीति. अयं च दुष्परिहरो गर्वो नाम महान् शत्रुः स्वकर्तव्यमार्गे. तस्मादयं यत्नेन परिहरणीयः.

किंच—लौकिका विषया मानवमीदृक् मोहयन्ति यत्स न जानात्यहमेभिर्मोहित इति. विशेषतश्च साम्राज्यमदोऽधिकारमदश्च. वयं चेतिहासे पश्यामः यत् बहवः प्रथममुत्तमप्रकृतिका अपि राजानो राज्याधिकारप्राप्तौ तथा विभिन्नप्रकृतिका भवन्ति यद्वक्तुमप्यगोचरः. अतः साम्राज्यमदापगमाय भूयोभूयः शिवराजः श्रीसमर्थैः संबोधितः.

एकदा श्रीसमर्थाः सातारानगरं जग्मुः. तत्र ते शिवराजं राजदुर्गस्थं निशम्य केनचित्कारणेन राजदुर्गं प्राविशन्. गत्वा च राजप्रासादस्य पुरस्तात् 'जयजय रघुवीरसमर्थ' इति उच्चैरुच्चार्य संप्रदायानुरूपां भिक्षामयाचन्त. तं च ध्वनिं श्रीसमर्थचरणानामिति प्रत्यभिजानन् राजा शिवो मनस्यचिन्तयत्, यादृशो हि भिक्षुकस्तादृश्येव भिक्षेति सर्वत्र नियमो दृश्यते. इमे तु त्रैलोक्यवंद्यचरणाः श्रीसमर्था मदीया गुरवः. तत्किमेभ्यः प्रदेयमिति.

अथ सत्वरमेव कृतनिश्चयः शिवराजो मुख्यं मंत्रिणमाहूय राजमुद्रांकितां कृत्स्नराज्यसमर्पणपत्रिकां विधाय तां स्वयमेव श्रीसमर्थभिक्षापात्रेऽक्षिपत्. श्रीसमर्थाश्च तामालोच्य सस्मितवदनकमलाः 'राजन् ? यद्यस्मभ्यमिदं सर्वं राज्यं समर्पितं तदा कर्तव्यत्वेन भवतः केवलं भिक्षाटनमेवाभीष्टमिति मन्ये' इति जगदुः. यदाज्ञापयन्ति गुरुचरणा इत्युक्त्वा सत्यमेव भिक्षाटनोद्यतं शिवराजं वीक्ष्य सानन्दास्ते श्रीसमर्थाः शिवराजेन समं नदीतीरं गत्वा निर्वृत्तपाका अभुंजत. अथ स्वस्थचित्ताः श्रीसमर्थाः 'राजन् ? अनेन राज्येन किमस्माकं प्रयोजनं ? सत्त्वप्रकृतिकानां न इदमुपाधिरेव. तदिदं राज्यं पालयितुं क्षत्रियजातिरेव शक्ता. स च

त्वं सत्यमेव द्वितीयो जनक इव निस्पृहः केवलं कर्तव्यबुद्ध्या राज्यं करोषीति दृष्टं. शिवराज ? स एव राजा न्यायेन सर्वाः प्रजाः सम्यक् पालयति यो हि निस्पृहः स्यात्. यत्र च विषये बद्धस्पृहो भूपो भवति तस्मिन्विषयेऽन्यायो भवत्येव. स विषयोऽल्पो वा महान्वेत्यन्यदेतत्. यत्राऽन्यायः प्रचलति तत्र नाशः पदमाद्धात्येव. तस्माद्वत्स! शिवराज! यो हि कर्तव्यं चिरस्थायि कर्तुं वांच्छति तेन प्रथमं स्पृहा त्यक्तव्या. अस्तु. इदं सर्वं राज्यं रघुपतये त्वया समर्पितं तद्रघुनाथेन च स्वीकृतमेव. त्वं तु साम्प्रतं रघुनाथस्यामात्यो भूत्वा सर्वं राजकार्यं कुरु. अस्य चिह्नं च–अद्यप्रभृति त्वदीये सेनावेशे राजकीयत्वेन व्यवह्रीयमाणा पताका काषायवस्त्रमयी कार्या. तथैव यदा द्वौ क्षत्रियौ वा वैश्यौ वा शूद्रौ वा परस्परं मीलतस्तदा सन्मानवाचकः 'रामराम' शब्दस्ताभ्यां योजनीयो नतु 'जोहार' शब्द इति महता प्रेम्णोपादिशन्. शिवराजोऽपि 'गुरुचरणानामाज्ञा' इत्युक्त्वा राजधानीमागत्य सर्वं तथैव चक्रे.

वाचकाः ? समस्तेऽस्मिन्भूतलेऽगणिता राजानः संवृत्ताः. तेषामितिहासा अपि तैस्तैः कुशाग्रमतिभिर्लिखिता उपलभ्यन्ते. परन्तु कस्मिन्नपीतिहासे केनचिद्राज्ञा तृणवत्कृत्स्नस्य राज्यस्य त्यागस्तद्गुरुणाऽपि पुनस्तस्य प्रत्यावर्तनमिति न पश्यामः. प्रत्युत क्षणिकस्यास्य राज्यस्य तृष्णया पितृवधादयो यैरनुष्ठितास्तान् बहुलान् वयं शृणुमः. धन्यः स लोकोत्तरनिस्पृहताशाली शिवराजः, धन्याश्च ते तादृशोपदेशकारिणः श्रीसमर्थचरणाः. सज्जनाः! वयं तु केवलमेकस्य कार्षापणस्य कृते रात्रिंदिवं कलहायामहे. अस्तु.

(५)

एकदा शिवराजः स्वराज्याभिषेकविधौ समाप्ते सति सज्जनगड-दुर्गे सज्जनमेलनं चिकीर्षुः श्रीसमर्थांस्तदर्थमपृच्छत्. श्रीसमर्थ-पादा अपि सज्जनसमागमं वांच्छन्तो महताऽनन्देनानुमुमुदिरे. ततः शिवराजः सर्वानपि सज्जनानाह्वयितुं वृद्धान्मंत्रिणः प्रेष-यामास.

तेऽपि सानन्दं श्रीसमर्थानां दर्शनार्थमागता महताऽऽनन्देन हरिकीर्तनानि चक्रुः. तदानीं साधुवरास्तुकारामा अप्यागच्छन्. ब्राह्मणभोजनं च प्रतिदिनं प्रावर्तत. यदा ब्राह्मणसंख्या सपादल-क्षमात्राऽभवत्तदा सर्वेभ्यो विप्रेभ्यो दक्षिणां वितीर्य सज्जनान् राजा शिवः स्वयमपूजयत्.

वाचकाः! राजा शिवः स्वयं जलं गृहीत्वा सज्जनपादौ प्रक्षा-ल्य स्वीयेनामूल्येन वस्त्रेण संमार्जयतिस्मेति किं न लोकोत्तरं कृत्यं? वयं च केवलमाहारस्य पर्याप्तत्वेऽपरान् मदान्धत्वेन तिर-स्कुर्मः. आत्मानं चेन्द्रादपि श्रेष्ठं मन्यामहे. परन्त्वलौकिकपराक्रम-शाली स्वराज्यस्थापकोऽपि शिवराजः केवलं भक्त्याऽत्मानं तृणी-कृत्य दासवत्सज्जनानां पादान् प्राक्षालयत्. सज्जनाः! इदमेवा-न्तरं सज्जनदुर्जनयोः. सज्जना हि संपत्तौ वा विपत्तौ वा न नैस-र्गिकीं शालीनतां त्यजन्ति. नापि लौकिकैश्वर्यमदोमत्ताः सन्त आत्मानमेव विस्मरन्ति. दुर्जनास्तु सदैव स्वल्पेनापि लाभेना-त्मानं धन्यंमन्यमानाः स्वात्मानमेव विस्मरन्ति. धन्याश्च ते सन्तः, धन्याश्च ते शिवराजप्रभृतयः सज्जनसेवकाः. यैरुभयैरपि समान-शीलैर्धन्यीकृतोऽयं लोकः. वाचकाः? तदानींतनाः साधवोऽपि तादृशालौकिकसामर्थ्यशालिनो वैराग्यमूर्तय एवासन्. अस्मिन्नेव

सत्समागममहोत्सवे श्रीतुकारामसाधुवराणां पूजार्थं महान्तं सुवर्णराशिं गृहीत्वा शिवराजः समाजगाम. पंचग्रामांश्च तेभ्यो दातुमियेष. श्रुत्वैवेदं वृत्तं ते तुकारामाः पूजामगृहीत्वैव सज्जनगडदुर्गान्निर्गत्य पंढरपुरमगच्छन्. श्रीशिवराजश्च तान् साधुवरान् पंढरपुरंगतान् निशम्यात्यन्तं दुःखितोऽभूत्. परन्तु श्रीसमर्थाः—'वत्स शिव ! येषां त्रैलोक्यराज्यमपि तृणवदस्ति कथं खलु ते साधुवरास्तुकारामप्रभृतयस्तव पंच ग्रामान् ग्रहीष्यन्ति ! परन्तु तवानेन वर्तनेन तेषां दर्शनमपि दुर्लभमभवत्.' इत्युपदिश्य सान्त्वयन्ति स्म.

वाचकाः ! यद्येतादृशी वैराग्यसम्पत्तिः स्यात्तदा तस्याः किं दुष्करं कर्म. इदमशक्यमिदं शक्यं कर्मेति क्षुद्राणां नो दृष्ट्या. लोभाक्रान्ता नश्चैतन्यशक्तिर्नालौकिककार्यकरणसमर्था. सतां तु निर्लोभकत्वाद्दूरीभूतसकलावरणा चैतन्यशक्तिरप्रतिबंधा सर्वाणि तानि कार्याणि करोति, यानि परमात्मशक्तिः कर्तुं प्रभवति. अस्तु.

एवंक्रमेण सज्जनान् सेवमानो विदुषः सत्कारयन् वैदिकविद्यां समुत्तेजयन् राजा शिवो नानाकार्याण्यकरोत्.





## (१२) (श्रीसमर्थानां तत्त्वोपदेशः संसारवृत्तिश्च)

वाचकाः ! निरूपितः शिवराजस्य श्रीसमर्थचरणानां च परस्परसंबंधसंबद्धः कथाविभागः. अधुना श्रीसमर्थानां तत्त्वोपदेशं तथा तेषां संसारवर्तनं च निरूपयितुमारभे.

श्रीसमर्थचरणानां सामान्यतस्तत्त्वोपदेशः 'श्रीरघुनाथोपासना' एवासीत्. ये खलु संसारनिवृत्तिमिच्छन्तो, ये च लौकिकसुखाभिलाषिणस्तेभ्यः सर्वेभ्य एव प्राथमिकमुपदेशं श्रीरघुपतिसेवामेव श्रीसमर्थचरणाश्चक्रुः. न मयैतत्स्वकपोलकल्पितं किंतु तैरेव स्वविरचिते दासबोधग्रंथे लिखितमस्ति. तद्यथा—

मुख्यं हरिकथाख्यानं, द्वितीयं राजकारणं ॥
तृतीयं सावधानेन, सर्वत्र समवर्तनम् ॥ १ ॥

यस्य कस्यापि लौकिककार्यकारिणोऽलौकिककार्यकारिणश्चात्यावश्यकमिदं—यत्—प्रथमत इह जगति निखिलकार्यकारिणी काचन चैतन्यशक्तिरस्तीति ज्ञानस्य संपादनं. ये खलु न जानन्ति स्वस्मादधिकशक्तिशालिनी काचन शक्तिरस्तीति, कथमिव ते स्वोन्नतिं प्रति लभेरन्. यो हि मत्तः कश्चनाधिकधनाढ्यो देवदत्तोऽस्तीति जानाति स एव नानाविधैरुपायैर्धनमर्जयति नान्यथेति दृष्टं लोके. तस्मादुपासनां विना नान्य उपायो मनुष्योन्नतौ.

वाचकाः ! ये खलु श्रीसमर्थचरणैर्लोकोद्धारार्थं ग्रंथा लिखितास्तेषु मुख्यः श्रीदासबोधो नाम. दासबोधशब्दस्य व्युत्पत्तिस्तु—दासानां—रघुपतिचरणशरणागतानां दीनानां जनानां—बोधो यस्मा-

द्भवति स ग्रंथविशेषः. सज्जनाः ! ईदृशेन ग्रंथनाम्ना भवद्भिरुपलक्षितमेव स्यात्—दासबोधग्रंथे प्राधान्येन निरूपितो विषयः—'श्रीरघुपतेरुपासनैव' इति ।

किंच यद्यपि अन्ये बहवो विषया व्यवहारोपयुक्ता अस्मिन् दासबोधग्रंथे निरूपितास्तथापि प्रामुख्येनोपासनायाः प्रतिपादनेन तस्या एव मुख्यत्वं.

पाठकाः ! यद्यपि नायं समयः कृत्स्नदासबोधविषयप्रतिपादनस्य, यतो न वयं दासबोधं व्याकर्तुं प्रवृत्ताः किंतु श्रीसमर्थानां पवित्रं चरितं लिखितुं, तथापि प्रसंगसंगत्या श्रीसमर्थविरचितेषु ग्रंथेषु—दासबोधस्य प्राधान्येन तत्र चोपरिनिर्दिष्टानि कारणानि कथं निरूपितानीत्येव प्रसंगतो वयं पश्यामः.

उपरिनिर्दिष्टश्लोके 'मुख्यं हरिकथाख्यानं' इत्युक्तं. तच्च श्रीसमर्थचरणैर्दासबोधग्रंथे सविस्तरं निरूपितं. तथाहि—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनं ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनं ॥

इति योऽयं प्रसिद्धः श्लोकस्तमाश्रित्य श्रीसमर्थचरणैर्नवधा भक्तिर्निरूपिता. तत्र चास्या भक्तेर्लोकप्रसिद्धतया न किंचित् व्याख्यायते. यद्यपि उपरिनिवेदितां नवधाभक्तिं बहवः साधवः समुपासत, तथापि श्रीसमर्थानां तथाऽन्येषां साधूनां मध्येऽयं विशेषः- यत् यद्यच्छ्रीमत्समर्थचरणैर्लिखितं वा कथितं वाऽऽचरितं वा तत्सर्वमेव व्यापकदृष्ट्या धर्मस्योज्जीवनार्थमेव. यदपि तैस्तात्त्विकं निरूपणं कृतं तदपि यथाशक्ति व्यावहारिकस्वास्थ्यमुपपादयितुं. श्रीसमर्थान यथा परमार्थः प्रिय आसीत्तथैव व्यवहारोऽपि. यद्यपि तैर्न संसारोपयोगी गृहस्थाश्रमः स्वीकृतस्तथापि ते रात्रिंदिवं सांसारिकजनस्वा-

स्थ्यार्थं प्रायतन्त. यथाचेदं भक्तिनिरूपणं. वाचकाः! न केवलमेतत् पठनार्थमेव किंतु ये खलु तैः स्थाने स्थाने मठाः स्थापितास्तत्र भक्तिमार्गप्रसारार्थं कृता नियमा एव. ये खलु तेषु तेषु मठेषु स्थापिताः शिष्यास्त एतत्सर्वं पाठिता एव. यथाहि राजा प्रथमं स्वराज्यपालनार्थं कांश्चिन्नियमान् करोति ततस्तान् पठित्वा निष्णातान् पुनरपि सर्वस्मिन् राज्ये तादृशनियमप्रसारार्थं स्थाने स्थाने स्थापयति तथैव प्रकृतेऽपि. अतएव श्रीसमर्थचरणैः स्वशिष्यद्वारा संबोधितानां जनानां साहाय्येन शिवराजः स्वराज्यस्थापनारूपमलौकिकं कार्यं चक्रे.

सज्जनाः! सर्वत्र भक्तिमार्गं प्रसारयतां श्रीसमर्थानां तादृशविधौ द्वितीयोऽपि हेतुरासीत्. स चेत्थम्—

वैदिके समये यदा खल्वत्रार्याः समागतास्तदाऽस्मिन् भारते वर्षेऽनार्यजातय एवावसन्. तांश्च प्रबला आर्या विजित्य दासीचक्रुः. दासीकृतानामासां केवलं सेवाधर्म एव कर्तव्यत्वेनावशिष्टः. ते चार्याः स्वेष्वेव ब्राह्मणक्षत्रियवैश्याख्यांस्त्रीन् वर्णान्विधाय तानेव सम्यगपालयन्. त एते वर्णा एव ज्ञानसंपादनेऽधिकारिण आसन्. तेऽपि ज्ञानं संपाद्यालौकिकं सुखं लेभिरे. दीना बन्दीकृता अनार्याः शूद्रत्वेन व्यपदिश्यमाना ज्ञानस्य लेशमपि नालभन्त. तेषां च पशुवद्यथेच्छं क्रयोविक्रयोऽपि बभूव. एवंक्रमेण कालं यापयन्तोऽपि तेऽनार्या मानवा ज्ञानसंपादने प्रतिबंधं वीक्ष्य निभृतमदूयन्त. यद्यपि बलवद्भिस्त्रैवर्णिकैराक्रान्ता न प्रकटतया तद्विरुद्धं किंचिदाचरितुं शेकुस्तथापि निभृतमत्यद्विषुः. वाचकाः! योहि प्रकटीभूतो द्वेषो वा क्रोधो वा कामो वा यो वा को वा मानसिको विकारः स तथा बलिष्ठो न भवति यथा मनसि गुप्तं वर्धमानः. यथा ह्यप्रकटितज्वालो

निभृतं ज्वलन्नग्निः सर्वमेव गृहं भस्मसात्करोति, तथैव यं कमपि वर्णमुद्दिश्यान्यस्मिन् वर्णे जायमानो द्वेषाग्निस्तं वर्णं सर्वथा नाशयतीति सर्वोऽयं जगदितिहासो वदति. अस्तु.

एवंक्रमेण दासीकृतशूद्रजातौ त्रैवर्णिकानां द्वेषे वर्धमाने यदा परकीयैर्यवनैस्त्रैवर्णिका आक्रान्तास्तदा त एतेऽनार्या न तान् ब्राह्मणादीन् युद्धे साहाय्यं चक्रुः. प्रत्युत परकीया एव तान्नानाविधैरुपायैरात्मवशांश्चक्रुः.

वाचकाः ! तस्यास्य द्वेषस्यायं परिणामः संवृत्तो यदयं देशः परकीयैश्चिरादेव दासीकृतोऽधुनाऽपि तथैवास्ते. अद्यापि स द्वेषो न शाम्यति. सज्जनाः ! तेषामप्यज्ञानिनां शूद्राणां को वा दोषः ? यत्ते स्वयमशिक्षिताः पारतंत्र्यमग्नाः परकीयानां देशशत्रूणां सहाया अभवन्. ये हि किंचिदजानंस्तेषामेवायं दोषः. ये तु ब्राह्मणादयोऽऽत्युत्तमवर्णा नानाविधशास्त्रपारंगतास्तैः कथमिमेऽत्रत्या एव स्वापेक्षया संख्ययाधिका अशिक्षिताः स्थापिता इति त एव दोषभाजः. अस्तु.

एवंक्रमेण यवनसाम्राज्यकाले बहवो ब्राह्मणा बहवश्च शूद्राः साम्येन यवनाधिपतिं सेवमाना अपि पूर्वं वृत्तं स्मरन्तस्तथैव परस्परमद्विषन्. तं च द्वेषं मूलीकृत्य यवनाधिपतयो निश्चिन्ता अत्र स्वर्गसुखमभुंजत. एवं गच्छति काले सर्व एव चातुर्वर्णिका अपारदुःखदग्धा अपि नैनमनर्थकारणं परस्परद्वेषमत्यजन्. यतो महंमदीयसाम्राज्येऽपि प्रायः सर्व एव ब्राह्मणादयो यागादिरूपा एव वेदकथिता धर्मक्रिया अकुर्वन्. ताभ्य एव च निश्रेयसममन्यन्त. तत्र च नासीदधिकारः शूद्राणामिति लौकिकस्वातंत्र्यसौख्यसंपन्ना अपि शूद्रा अलौकिकसुखविषये वेदकथिता यज्ञादिक्रिया एव साधनत्वेन मन्यमानास्तत्र च स्वाधिकारमपश्यन्तः पूर्ववदेव तानद्विषन्.

एवंप्रयाते भूयसि काले यदा खलु तुकारामप्रभृतयः शूद्रजातीया एव साधवो व्यराजन्त. स्वतेजसा भक्त्यतिरेकेण च ब्राह्मणांस्तिरश्चक्रुस्तदा वह्वो ब्राह्मणास्तेषां शिष्या एवाभवन्. अथ सर्वैः साधुवरैः स्वदेशस्य स्वधर्मस्य चोद्धारं चिकीर्षुभिर्मिलित्वेत्थं निर्णीतं. ऐक्यादृते न कदाऽपि देशोद्धारः कर्तुं शक्यः. तच्चैक्यं परस्परद्वेषेऽनष्टेऽशक्यं. सोऽपि द्वेषो यावन्न्यूनाधिकभावो जन्ममूलको धर्मक्रियाभेदमूलकश्च तिष्ठेत्तावत्पर्यन्तं चिरंजीव्येव. ताश्च धर्मक्रिया वेदमूलकत्वाच्चिरं रूढा एव. एवं च सेयमनर्थपरंपरा केवलं वेदोक्तानां धर्मक्रियाणामेव निःश्रेयसप्रदत्वं नान्यस्येति अभिमानमूलिकेति तत्स्थाने भक्ति तथा परमात्मनामग्रहणसंप्रदायं प्रवर्तयामहे. अनेन सुलभोपायेन प्रयासं विनैव वैदिक्यो यज्ञादिक्रियाः प्रतिबद्धा भविष्यन्ति. प्रतिबद्धेषु यज्ञादिवैदिकविधिषु तन्मूलकवर्णाधिकारमूलको द्वेषोऽपि प्रलयं गमिष्यति. नामसंकीर्तनं श्रीभगवतस्तद्भक्तिश्च निश्रेयससाधनं, तत्राऽस्ति सर्वस्याप्यधिकार इत्युक्ते शूद्रादयोऽपि सन्तुष्टा ब्राह्मणादीनां द्वेषं त्यक्ष्यन्ति. ततश्च परस्परद्वेषरहितेषु निर्विकारेषु मनःसु स्वदेशसेवार्थे कृत उपदेशो बद्धमूलः फलिष्यतीति.

वाचकाः ! एतदर्थमेव श्रीसमर्थचरणाः स्वसंप्रदाये यागादीः क्रिया अनुपदिश्य भक्तिमार्गमेव ते समुपादिशन्. नैतावदेव किंतु—स्वसंस्थापितेषु मठेषु तमेव महता प्रयत्नेन प्रासारयन्. उक्तंच—

चतुर्णामपि वर्णानां, योग्यता नामवर्णने ।
समाना मूढवर्गाश्च, नाम्नैव सुखमाप्नुवन् ॥

( चहूं वर्णांस नामाधिकार, नामीं नाहीं लहानथोर ॥
जडमूढपैलपार, पावती नामें. ४ दशके. )

वाचकाः ! केवलेनानेनैव निदर्शनेन भवद्भिरवगतमेव स्यात्-यत् सर्वथा सर्वदा श्रीसमर्थचरणाः कियल्लोकहितदक्षा आसन्निति. एवंरीत्या केवलया भक्त्या सर्वेषामैकमत्यं विधाय शमयित्वा च परस्परद्वेषं ते लोककल्याणपराः श्रीसमर्थचरणाः 'राजकारणं' नाम द्वितीयं प्रकरणमुपादिशन्.

सज्जनाः ! इह जगतीतले लौकिकी दृष्टिरलौकिकी दृष्टिरिति दृष्टिद्वयमास्ते. तत्र भूयांसो जना लौकिकीं दृष्टिमाश्रितास्तल्लभ्यं लौकिकं सुखमेव कामयन्ते. सैषा पश्वादिप्राणिसाधारणैव. यथाहि पश्वादय इन्द्रियसुखं वांछन्तस्तत्संपादनाय प्रयतन्ते तथैव लौकिकदृष्टिशालिनोऽपि जनाः. एवं यदा लौकिकं सुखं कामयमानानां परस्परं कलहो जायते तदा स कलहः 'युद्ध' शब्देनाभिधीयते. तादृशयुद्धे तु बलिष्ठा दुर्बलान्विजित्य तेषां सुखमपहरन्तः स्वसुखाधिक्यलालसामत्यारूढां शमयन्ति. ते च दुर्बला निभृतं सबलान्द्विषन्तः कालप्रतीक्षां कुर्वन्ति. प्राप्ते समये पुनरपि स्वशत्रून् विनाश्य तेषां सुखमपहरन्तश्चिरवासिनीं स्वसुखलालसां शमयन्ति. वाचकाः ! एवंविधमिदं लौकिकसुखवासनाचक्रं तदुपकारि युद्धचक्रं चानिशं प्रचलति. तामिमां लौकिकसुखलालसया पश्वादिजातिवत्कलहायमानां मानवजातिं वीक्ष्य केचन विचारशीला मानवा दुःखाकुला अत्यारूढां लौकिकसुखलालसामलौकिकसुखप्रतिपादनेन विभज्य शमयन्ति. तत्र च कारणं तेषामुपदेशेन विचारजागृतिरेव. परन्त्वलौकिकसुखं विचारयितुमप्यशक्नुवन्तो मानवपशवो

यदाऽलौकिकसुखसाधने प्रयतमानान् शान्तलौकिकसुखवासनान जनान् पीडयन्ति तदा ते जना मिलित्वा तेषां दुर्मदानां मानव-पशूनां शासनार्थं कांचन शक्तिं निर्मान्ति तामेव शास्त्रकोविदा लौकिकाश्च जना 'राजशक्तिं' वदन्ति. वाचकाः ! एतस्माद्विवर-णाद्भवद्भिरवगतमेव स्यात्—यत् मानवजातेः परमं कार्यं 'अलौकि-कसुखसंपादनं'. तस्य निर्विघ्नसिध्यर्थं राजकीयशक्तीत्यादिकं. अस्मा-देव कारणाच्छ्रीसमर्थैः प्रथमश्लोके राजकारणस्य पश्चादुपन्यासः कृतः. अस्तु.

सज्जनाः ! राजकारणसिद्धौ प्राधान्येन मानवमानसविज्ञानमत्या-वश्यकं. यतो नानाविधा मानवाः स्वस्वसुखं वाञ्छन्तः कूटमार्गैः स्वाभिलषितं साधयितुं प्रयतन्ते. तस्मादेव कारणाद्राजकारणमुपदि-शद्भिः श्रीसमर्थैः प्रथमतो मानवविभागः प्रदर्शितः. तत्रापि मूर्खो-त्तमजननिरूपणमपि. योहि राजकार्यकारी पुरुषो मूढोत्तमपुरुषान भेदेन ज्ञातुं न शक्नोति न स तस्मिन् यशस्वी भवति. किंच—उत्त-मजनसाहाय्यं विना राजशक्तिरपि न स्वीयं कर्म सम्यक्कर्तुं प्रभ-वति. ते च मूढबहुले मानवसमुदाये पाषाणराशाविव हीरका विर-ला एव भवन्ति. ततस्तेषां यत्नेन संग्रहार्थं मूढानां च परिहारार्थ-मवश्यं तयोर्ज्ञानमावश्यकं. एतत्सर्वं मनसि निधाय श्रीसमर्थैर्मू-ढोत्तमजनलक्षणानि कथितानि. तानि संक्षेपेण यथा—"य आत्मा-नं स्तौति, यश्च स्वदेशे विपद्यते, यश्च स्वपितॄणां कीर्तिं कथयति विद्यावैभवधनपुरुषार्थसामर्थ्यरहितोऽपि यो वृथाभिमानं करोति स मूर्ख इत्यादीनि". उत्तमजनलक्षणान्यपि—"आलस्ये सुखं न मनुते सूचकतायां मनो न ददाति, किमपि कार्यं सहसा न करोति

आत्मानं सुखिनं न मनुते, प्रयत्नं च न त्यजति, क्लेशेभ्यश्च नोद्विजते, सत्यपथं न जहाति, असत्यपथं नाक्रामति, कदाप्यसत्याभिमानं न बिभर्ति." इत्यादीनि. वाचकाः! इत्थं सामान्यतो मानवलक्षणानि निगद्य 'यत्नशिक्षा' नामात्युपयोगी विभागस्तैर्निबद्धः. तत्र च न केवलं स्वशिष्येभ्य एव वर्तनक्रमः कथितः किंतु सर्वेभ्य एव जनेभ्यः. एनं विभागं पठित्वा कीदृशी दिनचर्या कार्येति सर्वैरवधारणीयम्.

सज्जनाः! राजकारणं श्रीसमर्थैः सविशदं निरूपितं. यद्यत्र संक्षेपेणापि तद्वदिष्यामि तदा महान्ग्रंथविस्तरः स्यात्. तस्मात्तत्सर्वं मूलत एवावगन्तव्यम्.

एवंक्रमेण राजकारणं निरूप्यान्ते "सावधानता" प्रकरणमपि सम्यङ्निरूपितम्.

वाचकाः! यद्यपि अभवन्न भारते वर्षेऽनेके साधुवरा जगदलंकारभूता तैश्च निरूपिता लोकोत्तरतत्वप्रतिपादका ग्रंथा अपि, परन्तु श्रीसमर्थचरणानामिव लौकिकालौकिकतत्वप्रतिपादने कुशलो नैकोऽपि साधुरभूदित्यहं मन्ये. श्रीसमर्थपादानां–यथाहि भक्तिप्रतिपादनं, यथैव च ब्रह्मतत्वप्रतिपादनं, तथैव मूर्खपठितमूर्खप्रतिपादनं, तथैव राजकारणप्रतिपादनं. इदमुभयमपि नातिलोकोत्तरं मन्ये तथापि तृतीयं 'सावधानता'प्रकरणं लोकोत्तरमेव. यथाहि पारमार्थिकसाधनेऽपि मनसः सावधानता संग्राह्यैवमेव व्यावहारिके विषये मनसः सावधानताऽप्यावश्यिका. अनवधाने च पाकोऽपि नश्यति तदा का कथा लौकिकानां वाऽलौकिकानां विषयाणां. अतएव जगति कथं सावधानेन वर्तनीयमिति निरूपितं. वाचकाः! केवलं स्वरूपदर्शनार्थं तेषां काश्चनोक्तीरुदाहरामि.

स्नेहेन वर्धते स्नेहः, प्रीत्या प्रीतिश्च वर्धते ॥
अथवा क्षणमात्रेण, सर्वा प्रीतिर्विनश्यति ॥ १ ॥
मानेन वर्धते मानः, अपमानेन नैव तु ।
तस्मात्कदापि नो लोकाः, दूषणीया दुरुक्तिभिः ॥ २ ॥
प्रेम्णा महान्ति कार्याणि, जायन्ते वैरतोऽन्यथा ॥
इति सत्यं नवेति ज्ञैः, ज्ञातव्यं लोकसंगतौ ॥ ३ ॥
एकाकी लोकसार्थेन, विरुद्धः शक्नुयात्कथं ।
स्वल्पं कार्यं विधातुं च, अतो द्विष्यान्न वै जनान् ॥ ४ ॥
संबोद्धव्या जनाः सर्वे, पावनीयाः खला जनाः ।
सर्वस्मिन्भूतले भक्तिः, वर्धनीया प्रभोः सदा ॥ ५ ॥
श्रेष्ठः स एव विज्ञेयः, यः कुर्यादुत्तमां क्रियाम् ।
स्वस्वकर्मानुरोधेन, मानवा उत्तमाधमाः ॥ ६ ॥
मनुष्याणां मनुष्यत्वं, बुद्धिरेव न चान्यथा ।
राज्यं विहाय निर्बुद्धः, भिक्षां याचति दीनवत् ॥ ७ ॥
वेषस्तु ग्राह्यो मूढस्य, किंतु चेतः सुसंस्कृतं ।
कदाऽपि लोकचेतांसि, दूषणीयानि नैव तु ॥ ८ ॥

वाचकाः ! कियद्वोदाहरामि ! यदि च सर्व एव प्रबन्धः श्लोकरत्नमयस्तदा कियद्वाऽनुवदिष्यामि ? लोकोत्तरा खलु श्रीसमर्थचरणानां व्यवहारविषये सावधानता. यथाहि केचन भगवद्भक्ता भगवत्येव निहितभारा औदासीन्येन व्यवहारे वर्तन्ते तथा नैव श्रीसमर्थाः, किंतु ये खलु केवलं व्यावहारिका जनाः सततं व्यावहारिकसुखरूपस्य ध्येयस्य सिध्यर्थं यथा रात्रिंदिवं प्रयतन्ते तथैव निरासक्ताः प्रायतन्त. वाचकमहाभागाः ? किं नेदं लोकोत्तरं ?

जलावस्थायिनोऽपि पुष्करपलाशस्य यथा जलेन न संबंधस्तथा संसारकार्याणि कुर्वतामपि श्रीसमर्थपादानां चेतसि आसक्तिसंसर्गोऽपि नासीत्.

वाचकाः ! निरूपितमतिसंक्षेपतः श्रीसमर्थानां तत्त्वज्ञानं तदुपदेशश्च. साम्प्रतं तेषां 'संसारवृत्तिं' निरूपयामि. तत्राप्यादौ तेषां यदियती जगद्वंद्यता जाता, शिवराजसदृशा अलौकिकपुरुषा अपि तान् गुरुत्वेनामन्यन्त, तत्र कारणं किमिति विचारयामि. नैतावदेव किंतु अस्य लोकोत्तरस्य लोकचातुर्यस्यालौकिकस्योपासनासामर्थ्यस्य कारणं च किमित्यपि.

वयं च प्रतिदिनं पश्यामः—ये खलु अधिकलोभग्रस्तास्त एवाधिकपापिन इति. तत एव निर्धार्यते—लोभ एव च कृत्स्नस्य पापस्य तथा कुकृत्यानां च कारणमिति. महंमदीयसाम्राज्ये ये खलु सम्राजो यवनाधिपतेः कृपया वयं ग्रामाधिपत्यं प्रान्ताधिपत्यं लप्स्यामह इति लोभग्रस्ता राजानो वेतरे जना वाऽऽसंस्त एव स्वधर्मं स्वात्मजाश्च दिल्लीश्वरादिभ्यः समर्पयन्. अहो लोभस्य प्रभावः—यतो महामानिनः पवित्रकुलसंभवाः क्षत्रियश्रेष्ठा राजानो रजपूतनृपाश्च दिल्लीश्वरकृपालोभाविष्टाः स्वकन्यका दिल्लीश्वराय तथा तत्पुत्रपौत्रेभ्यश्च समर्प्य लब्धानि राज्यैश्वर्याणि अभुंजत. बहवश्च जनाः केवलं क्षणिकसुखलोभग्रस्ता अत्युत्तमं स्वधर्मं त्यक्त्वा स्वपूर्वजैर्वन्दिताया गोर्मांसमप्यभक्षन्. सज्जनाः ! लोभी मानवः कियन्ति पापकर्माणि करोति इत्यत्र नास्ति वक्तुमावश्यकता. सर्वेषां तद्विदितमेव. अतः पापत्यागार्थं लोभहानार्थं च मानवेन लौकिकविषयेषु सुखद-

त्वभावना यथाशक्ति समूलमुच्छेदनीया. प्रियवाचकाः! इममेव लौकिकविषयसुखत्यागं वैराग्यनाम्ना शास्त्रकारा व्यपदिशन्ति.

यश्च निस्पृहः स एव न्याय्यं कर्माचरति न्याय्यमुपदिशति च. प्रायः ऐश्वर्यमदोन्मत्ता जनाः कुकर्माणि कुर्वन्त्येव. नापि तेभ्यस्तदुपजीविन एव न्याय्यमुपदेष्टुमर्हन्ति. ते च वराकाः स्वोपजीविकापालनार्थं स्वस्वामिमनोवृत्तिमेवानुसरन्ति. अत्रान्तरे धर्मस्य वा सदाचरणस्य वा तत्त्वज्ञानस्य वा कथं प्रसरो भवेत्? यस्य कस्यापि तत्त्वविद उपदेशो नाम लौकिकविषयवासनान्यूनीकरणविषयक एव. एवंस्थिते ये स्वोदरपूरणार्थं पापाचाररतान् धनाढ्यानुपजीवन्ति तेभ्य एवेदृशस्योपदेशस्यापेक्षा नाम वंध्यायाः सकाशात्पुत्रस्यापेक्षा. तस्माद्ये खलु लोकोत्तरं किंचिदपि कार्यं कर्तुमिच्छन्ति तैः प्रथमतो दुर्घटमसिधाराव्रतसमं निस्पृहताव्रतं स्वीकरणीयं. स्वोदरपूरणार्थं च भिक्षाव्रतं. यो हि मधुकरवृत्त्या जीवति तस्य नास्ति कस्यापि मनोऽनुवर्तनावश्यकता. अस्तु.

अस्मिन्नार्यावर्ते सर्वेषु वर्णेषु ब्राह्मणा एव विद्वांसः सर्वश्रेष्ठा आसन्. ते च दुर्वृत्तेभ्यो राजभ्यो न्याय्यमार्गमुपदिश्य तद्द्वारा सर्वानपालयन्. तेषां सर्वदा वनवासिनां सर्वेषु लौकिकविषयेषु निस्पृहाणामाज्ञा इन्द्रसदृशा ऐश्वर्यसम्पन्ना अपि राजानः शिरसाऽमन्यन्त.

अथ दुर्दैवतो यदाप्रभृति विप्रजातिर्विद्याधनं विहाय लौकिकं धनं कामयमाना विषयसुखलालसान्विताऽभूत्तदाप्रभृति ब्राह्मणजातिरन्याभिर्जातिभिरपामन्यत. नापि दुर्मार्गवर्तिनो राज्ञः सन्मार्गोपदेशे सा समर्थाऽभूत्. बहवो हि शास्त्रसंपन्ना अपि ब्राह्मणाः क्षुद्रविषयलालसाशान्त्यर्थं दुर्वृत्तान् धनमदान्धान् धनिकान् स्तुवन्ति.

वाचकाः ! ईदृशानां ब्राह्मणानां वचोभिर्धनिकचित्तेषु कः परिणामः स्यात् ? तस्मात् ये खलु विद्वांसो, ये खलु अलौकिकं सुखं वांच्छन्ति तैर्लौकिकसुखविषये विद्यमाना वांच्छा न्यूनीकरणीयैव. निस्पृहेषु विद्वत्सु विप्रगणेषु अवश्यं सर्वेषामादरः स्यात्. सर्वोपि जनस्तेषां वचः प्रमाणीकुर्यात्. इदं सर्वं मनसि निधाय लोकोद्धारपरैः श्रीरामदासस्वामिभिर्ब्राह्मणजातेर्धर्मस्तथा भिक्षाया महत्वं च वर्णितम्. तदेवाहं संक्षेपतोऽनुवदामि.

विप्रस्य महती दीक्षा, भिक्षया जीवनं सदा ॥
इदं व्रतं सदा सर्वैः, रक्षणीयं द्विजन्मभिः ॥ १ ॥
भिक्षा हि निर्भयं स्थानं, भिक्षया लभ्यतेऽर्हता ।
भिक्षा ददाति स्वातंत्र्यं, भिक्षया लभ्यते हरिः ॥ २ ॥
विना भिक्षां न वैराग्यं, वैराग्येण विना न कं ॥
सुखं विना न संपत्तिः, वृथा त्रासोऽर्जनेन तु ॥ ३ ॥
स्वदेशपरदेशौ हि, मूढेन परिकल्पितौ ॥
भिक्षूणां विदुषां कृत्स्नं, स्वदेशोऽवनिमण्डलम् ॥ ४ ॥

प्रियवाचकाः ! यद्यपि श्रीसमर्थचरणाः साक्षादेव शिवराजस्य गुरव आसंस्तथापि तैः स्वकीयं भिक्षाव्रतं न त्यक्तं. सदैव ते भिक्षावृत्तय एवासन्. अतएव समये समये शिवराजस्य दुरभिमाननिरसनमपि तैः कृतं. सोऽयं निस्पृहतागुणः श्रीसमर्थचरणेषु कियानासीदिति प्रदर्शनार्थमहं द्वित्रान् सन्दर्भाल्लिखामि.

एकदा शिवराजः कर्णाटकविभागे राज्यकार्यार्थं जिगमिषन्नाज्ञाग्रहणार्थं चाफळमठमागच्छत्. तत्र च श्रीसमर्थचरणानभिवंद्य तैर्दत्तानाशीर्वादान् गृहीत्वा राजधानीं गन्तुमियेष. राजा शिवश्चास्मि-

न्राजकार्ये कालक्षेपं मन्वानश्चाफळमठे नियुक्तं स्वाधिकारिणं रहस्यपृच्छत्—मठे कीदृशी व्यवस्था व्ययस्येति. स तु मुकुलितहस्तः—स्वामिन् ! यद्यपि नास्त्याज्ञा श्रीसमर्थानां मठवृत्तं निवेदयितुं, तथापि मठ आयादधिक एव व्ययो जायते. अतीते रघुपतिजन्मोत्सवे केवलं भिक्षां याचित्वैव सर्वा सामग्री समानीतेति जगाद. शिवराजश्च तन्निशम्य 'इदं पूर्वमेव त्वया कुतो न निवेदितमि'त्यधिकारिणं निर्भर्त्सयित्वा स्वयमेव गत्वा 'गुरुचरणाः ! इदं कृत्स्नं राज्यं न स्वामिचरणानां किंवाऽहमेव सेवायामनधिकारी ? यतो रघुपतिमहोत्सवार्थमपि मत्तो न किंचिदपि गृहीत्वा भिक्षां याचन्ति गुरुपादाः' इत्युक्त्वा साश्रुनयनोऽधःपश्यंस्तूष्णीं तस्थौ.

श्रीसमर्थपादास्तु दीनं वचनं निशम्य—'तात ! शिवराज ! नास्ति रघुपतिनिवासे मठे कस्यापि वस्तुनो न्यूनता. केवलं केनचिदन्यथा बोधितोऽसि, तथाप्येतावता तव यदि न सन्तोषस्तदा त्वं यथेच्छसि तथा कुरु' इति अवादिषुः. शिवराजोऽपि तामेवाज्ञां गृहीत्वा सर्वां सामग्रीं तथा द्रव्यादिकं सर्वमपि ददौ.

एवमेवैकदा श्रीशिवराजं स्वदर्शनार्थमागतं श्रीसमर्थाः 'शिवराज ! विजयादशमीमहोत्सवमत्र विधाय ततः परं गन्तुमर्हसि, यदि न चेन्महाकार्यातिपात' इत्यवोचन्. शिवराजोऽपि कार्यविशेषाभावाद्विजयादशमीमहोत्सवपर्यन्तं तत्रैव तस्थौ.

अथैकस्मिन्दिने शिवराजः श्रीसमर्थान्—'गुरुचरणाः ? अस्त्येका मम प्रार्थना. तां च यदि गुरुचरणाः स्वीकरिष्यन्ति तदाऽहं धन्यो भविष्यामि' इति विज्ञापयामास. अथ श्रीसमर्थचरणैः—'का सा प्रार्थना ? तां शीघ्रमेव कथय' इत्याज्ञप्तः शिवराजोऽवदत्—'क्षण-

भंगुरोऽयं देहः. बुद्बुदायितं चायुः. तन्मानवेन यथाशक्ति किंचिदपि सत्कृत्यं विधेयमेव. मया त्वित्थं संकल्पितं—चाफळमठं तथा जांबग्रामं च रघुपतिदर्शनार्थं नानास्थानेभ्यः प्रतिदिनमतिथयः समागच्छन्ति. तेषां च कृते देवस्थानाभ्यामतिव्ययो भवति. तं च व्ययमखण्डं प्रवर्तयितुं एकत्रिंशोत्तरशतसंख्याकान् ग्रामांस्तथा मदीये राज्ये प्रतिग्रामं भूमिं च वितरामि इति. तमिमं संकल्पं पूरयित्वा श्रीगुरुचरणैरनुग्राह्योऽयं दास' इति.

श्रीसमर्थाश्च तस्येदं वचनं निशम्य प्रहसन्तः—'राजन् ! नास्त्येतावतः प्रयासस्यावश्यकता. योहि रघुपतिस्तुभ्यं राज्यमदात्स एव स्वीयां सेवां केनापि योग्येन सेवकेन कारयेदेवेत्यूचुः.

शिवराज इदं श्रीसमर्थानां भाषणं निशम्य खिन्नमनाः साश्रुनयनकमलः 'अहमेवायोग्यो रघुपतिसेवायां' इति निगद्य तूष्णीमस्थात्. श्रीसमर्थाश्च तं खिन्नमवलोक्य दुःखाकुलाः प्रेमपरवशाः कृपासागराः—'शिवराज ? किमस्य क्षुद्रस्यार्थस्य कृते शोकः करणीयः ? अस्मिन्परिवर्तिनि संसारे किंचिदपि न चिरस्थायि. स परमात्मा तत्कालिकैर्भक्तवरैः स्वसत्तां बोधयन् स्वसेवां कारयति. यदि तु केवलं तत्राग्रहस्तदा यथेच्छसि तथा कुरु' इत्यवदन्. शिवराजस्तु तस्मिन्नेव क्षणे स्वसंकल्पं पूरयामास.

वाचकाः ! इदं केवलं ग्रंथविस्तरभीरुणा मया स्वरूपदर्शनमेव कृतम्. वस्तुतस्तु नास्ति श्रीसमर्थचरणानां निस्पृहतागुणवर्णनस्यावश्यकता ! गोब्राह्मणप्रतिपालके राजाधिराजे शिवराजे शिष्यतांगतेऽपि सति ये खलु आजन्मनः कौपीनं काषायांबरवसनं तथा कमण्डलुधारणं च न मुमुचुः, नापि भिक्षाटनं, तेषां लोकोत्तराणां सकल-

सज्जनगणमुकुटमणीनां श्रीरामदासस्वामिनां निस्पृहतावर्णनेऽस्त्यावश्यकता ? नास्त्येवेति पांसुलपादो हालिकोऽपि वदेत्. अस्तु.

बान्धवाः! सर्वानर्थकारणस्य लोभस्य नाशे निस्पृहताचरणमेवोपाय इति निरूपितं. तेन च निर्विकारं मनः संपद्यते. निर्विकारे च चेतसि न्याय्याऽन्याय्ययोः सम्यग्ज्ञानं जायते. तथाच सति न्याय्यानुष्ठानाल्लोका विश्वसन्ति. लोकेषु विश्वस्तेषु लोकोद्धाररूपं स्वकर्तव्यं सुकरं भवति.

पाठकाः? श्रीसमर्थाः कियन्निस्पृहा आसन्निति संक्षेपेणोपरिष्टान्निरूपितं. तया निस्पृहवृत्त्या तेषां मनः कियन्निर्विकारमासीदिति निवेदयितुं काश्चित्कथा लिखामि.

एकदा श्रीसमर्थचरणाः समं शिष्यगणेन निजानन्दस्वामिनां पुण्यतिथ्यर्थं कह्राडनगरं गत्वा स्वावासं सज्जनगडदुर्गमागच्छन्तो मार्गे स्नानार्थमवातरन्. मध्याह्नकाले ते सर्वे शिष्याः क्षुद्व्याकुला मार्गवर्तिं नूतनकणिशमण्डितं क्षेत्रं विलोक्य ततः कानिचित्कणिशान्याहृत्य भक्षणार्थं श्रीसमर्थचरणेभ्य आज्ञामयाचन्. तेऽपि तान् क्षुद्व्याकुलान् वीक्ष्य महता कष्टेन 'नैकस्मादेव क्षेत्रात्प्रभूतानि कणिशानि ग्राह्याणि किंतु नानाक्षेत्रेभ्यो माधुकरीं वृत्तिमाश्रित्य' इति तानाज्ञप्याज्ञामयच्छन्. ततश्चैनं नियोगमनुसृत्यैव पर्याप्तानि कणिशान्यादाय निवृत्तास्ते वाप्यास्तीरे तानि भर्जयित्वा भक्षयितुमारभन्त. अत्रान्तरे सर्वमिदं वृत्तं दूरतोऽवलोक्य ग्रामाध्यक्षः स्वक्षेत्रात् कणिशानामाहरणेनात्यन्तं संतप्तो जवेनागत्य श्रीसमर्थानेव मुख्यान् मन्यमानो महता क्रोधेन तानवशिष्टैर्धान्यस्तम्बैरताडयत्. तद्विलोक्य सर्वेऽपि शिष्यास्तमुद्धतं ग्रामाध्यक्षं ताडयितुमु-

घ्नताः स्वस्थचेतोभिः श्रीसमर्थचरणैर्निषिद्धास्तूष्णीमतिष्ठन्. जगदुश्च ते स्वशिष्यान्—'अस्य क्षेत्रात्कणिशान्याहृत्य भक्षयित्वा च तमेव पुनस्ताडयत? किमेतन्न्याय्यं भविष्यति? मुंचतैन'मिति.

ततश्च क्रमेण ततो निर्गत्य सातारानगरमागतान्श्रीसमर्थान्निशम्य सादरं प्रत्यागतः शिवराजः स्नापयित्वाऽभोजयत्. स्नानकाले च श्रीसमर्थानां पृष्ठभागे स्पष्टानि ताडनचिह्नानि प्रेक्ष्यातिविस्मितः 'किमिदं' इति तानेव भोजनसमयेऽपृच्छत्.

श्रीसमर्थचरणेषु किंचिदप्यनुक्त्वा भुक्त्वा सुप्तेषु संजातचिन्तः स शिवराजः सर्वानपि शिष्यानपृच्छत्. तेभ्यश्च सर्वं वृत्तं निशम्य क्रोधान्धः खड्गिन आहूय 'तं देगांवग्रामाध्यक्षं ताडयन्तो गृहीत्वाऽत्रागच्छत' इति समादिशत्. तां चाज्ञां निशम्य प्रबुद्धाः श्रीसमर्थचरणाः—'शिवराज? यद्यस्मद्वचनं क्रियते तदा ग्रामाध्यक्षो न ताडनीयः किंतु केवलमाह्वयनीयः. वयमेव तं दण्डयिष्याम' इत्यवोचन्. शिवराजोऽपि गुरुनियोगमंगीकृत्य तथैव खड्गिन आज्ञापयत्. तेऽपि च सत्वरं गत्वा तं गृहीत्वा राजधानीमाजग्मुः.

अथ राजपुरुषैः सभामानीतः स ग्रामाध्यक्षः श्रीसमर्थान् सिंहासनाधिवासिनो वीक्ष्य विस्मितो भीतः साष्टांगं प्रणिपत्याधोवदनस्तस्थौ. श्रीसमर्थाश्च—'तव क्षेत्रं सुफलिष्यती'ति शुभैर्वचनैस्तमभिनंद्य श्रीशिवराजं नमस्कर्तुमाज्ञापयन्. तेन तथाऽनुष्ठिते सति क्रोधसंतप्तं शिवराजं सान्त्वयन्तः श्रीसमर्था आहुः—'राजन्? अयमेवास्य दण्डो यदस्य क्षेत्राद्राजकरो न ग्राह्य' इति. तदेतदतिनिर्विकारमनसां तेषां वचनं निशम्य समं सर्वैः सभ्यैः शिवराजः परं विसिस्मिये.

वाचकाः ? उपरिकथिताद्वृत्तान्ताद्भवद्भिरवगतमेव स्यात्–यत्–कियन्निर्विकारं श्रीसमर्थानां मन आसीदिति. अपरमपि—

यदा खलु शिवराजश्चरमामाज्ञां ग्रहीतुं श्रीसमर्थानां समीपमागच्छत्तदा तैः समीचीनतया तत्त्वमुपदिश्य स कृतकृत्यः कृतः. अथ गते स्वराजधानीं शिवराजे उद्धवस्वामिनः श्रीसमर्थानपृच्छन्–'गुरुचरणाः ? शिवराजश्च मासपर्यन्तमत्रैवातिष्ठत्. ये खलु संलापा अजायन्त युष्माकं तैरहं तर्कयामि–'शिवराजश्चाचिरादेव दिवमारोक्ष्यति'इति. तत्तस्य कियानवधिरवशिष्ट इति दासाय निवेदनीय'मिति. श्रीसमर्थचरणास्तु–अद्य का तिथिरीति पृष्ट्वा 'अष्टमी' इत्युद्धवस्वामिभिर्निवेदिता 'अद्यारभ्याष्टमे दिने राजा परीक्षिदिव शिवराजः स्वर्गं गमिष्यतीति' कथयामासुः.

वाचकाः ? यः खलु परं प्रेमास्पदं, यः खलु स्वराज्यस्याद्यः संस्थापकः, यश्च दुर्दान्तेभ्यो यवनेभ्य इमां भारतभुवं मोचयितुं रात्रिंदिवं प्रायतत. यश्च श्रीसमर्थचरणानां द्वितीयं हृदयं, यदर्थमेव श्रीसमर्थचरणानामवतारो लोकसंग्रहेच्छायत्नादयः; तस्मिन्नस्मिन्नलौकिके सकललोकादरनिधौ शिवराजे दिवं गच्छति सति तस्य स्नेहेन दुःखस्य लेशोऽपि येषां मनो न पस्पर्श तेषां श्रीसमर्थचरणानां मनोनिग्रहसामर्थ्यं कीदृशमिति सुज्ञैर्वाचकैरेवावधारणीयम्. अतिविस्मयास्पदमिदं–यत्–ग्रामं गच्छत इव दिवं गमिष्यतः शिवराजस्य समयनिवेदनं. अतएव ते तादृशा अलौकिकसामर्थ्यशालिनः शिवराजस्य गुरवोऽभवन्.

वाचकाः ? यः खलु निस्पृहवृत्त्या व्यवहारे वर्तते तस्य केवलं लोभादय एव नश्यन्तीति न किंतु सर्वेषु चराचरेषु प्रेमाऽपि समु-

त्पद्यते. तदिदं प्रेम जना भूतदयात्वेन व्यपदिशन्ति. इदमेव प्रेम परमपवित्रस्य तत्वज्ञानोदयस्य प्रथमं सोपानम्. यो हि सामान्यतः सर्वेष्वपि प्राणिषु किमप्येकमवस्थितं तत्वं नांगीकरोति स कथं तेषु स्वसादृश्येन वर्तेत. सर्वत्रात्मौपम्येन वर्तनं नाम भूतदया. यथा हि प्रतिकूलवर्तनेन मम दुःखं तथैव मदीयप्रतिकूलवर्तनेन परस्यापीति ज्ञानमेव सेति यावत्. यो हि भूतदयाशाली स एव न्याय्यान्याय्ये सम्यगुपदिशति.

वाचकाः ? निस्पृहवर्तनाच्छ्रीसमर्थेषु भूतदयाऽपि कियत्यासीदिति सोदाहरणं प्रदर्शयामि.

चाफळमठे श्रीसमर्थपादेषु निवसत्सु सत्सु तैरेको बिडालः पालितः. तस्य च नाम 'राम' इत्यासीत्. प्रतिदिनं श्रीसमर्थाः स्वभोजनात्पूर्वं तं बिडालं घृतौदनं दुग्धौदनं च भोजयित्वा जलं च पाययित्वा 'राम ? त्वं तृप्तः' इति पृष्ट्वा पश्चात्स्वयमभुंजत.

एकदा स बिडालो मठस्थं घृतदुग्धादि सर्वमदूषयत्. भूयोभूयो महानसाध्यक्षैर्निवारितोऽपि तथैवान्वतिष्ठत्. तेन च त्रस्ताः सर्वे मठस्थाः पाचका मिलित्वा तस्य बिडालस्याक्षिणी तीक्ष्णद्रव्येणापूरयन्. अथ दैनिकक्रमानुसारेण भोजनसमये उच्चैराहूतोऽपि स बिडालो नाजगाम. ततः शिष्यैर्बलादानीतस्य तस्याक्षिभ्यां निपतन्तीं जलधारां वीक्ष्य दुःखाकुलास्तत्कारणमन्विष्यन्तः सत्यं कारणमुपलभ्य शोकाकुलाः श्रीसमर्थाः सर्वानपि सखेदमवदन्— 'केवलं यूयमेव श्रीरघुनाथस्याभिमता न पुनरयं ? यो हि—मानवजातिरेव केवलमीश्वरस्याभिमतेति मन्यते, तं मानवराक्षसं भगवान्नानुगृह्णाति' इति.

वाचकाः ? किमिदमुदाहरणं वाक्यं च श्रीसमर्थानां सर्वेषु प्राणिषु समबुद्धिं न दर्शयति ?

यथैव खलु श्रीसमर्थेषु निस्पृहतागुण आसीत्तथैवानधिकारिणं पुरस्कृत्य यत्किंचित्कार्यकरणद्वेषोऽपि. ते च सत्यममन्यन्त—अनधिकारी खलु कस्मिंश्चित्कार्ये नियुक्तस्तत्कार्यविधानापेक्षया तदाधिक्येन विनाशयत्येव. तस्मान्निपुणं विचार्य योग्येनैव किंचिदपि कारयितव्यमिति. वाचकाः ? ये खलु जगति कार्यस्य कर्तारः कारयितारश्च विद्यन्ते तेष्वयं युक्तायुक्तत्वविचारोऽत्यल्पो दृश्यते, ते च योग्ये मानवे नष्टे यं कमपि पुरस्कुर्वाणाः किंचित्सिद्धमपि कार्यं विनाशयन्ति. श्रीसमर्थचरणेषु—'कस्मिन् कार्ये को नियोजनीयो योग्यश्च कः' इत्यवधारणाशक्तिर्बलवत्यासीदिति दृश्यते.

शिवराजे दिवंगते पश्चात्तदीयो ज्येष्ठः पुत्रः शंभुराजस्तदीयं सिंहासनमध्युवास. स च दुर्वृत्तः शीघ्रकोपी कुतश्चित्कारणात्पैतृकान् प्रधानामात्यानघातयत्. स्वसापत्नमातरं भित्तिमध्ये निक्षिप्य जघान. बहून् शूरान् सेनाधिकारिणः प्राकारादधश्चिक्षेप. तेन भीताः सेनाधिकारिणः क्रमेण दिल्लीपतिप्रभृतीन् यवनाधिपानाश्रित्य तदीयाः सैनिका अभवन्. एवंप्रवृत्ते शिवराजस्थापितस्य स्वराज्यस्य विनाशं तर्कयतां सज्जनानां चेतांसि परमदूयन्त.

अथ ते सर्वेऽपि स्वराज्यस्य दुर्दशां विलोक्य दुःखाकुलाश्चाफळमठमागत्य श्रीसमर्थान् शंभुराजमुपदेशेन सन्मार्गवर्तिनं विधातुं विज्ञापयामासुः. श्रीसमर्था अपि तेषामिमां विज्ञप्तिमाकर्ण्य 'नायमुपदेशपात्रं, वृथाऽऽयासमात्रं स्यात्' इति वदन्तो नोपादिशन्. ततश्च प्रवृत्ते भयंकरे संहारे भूयोभूयो विज्ञप्ताः श्रीसमर्थाः केवलं शिव-

राजगुणवर्णनात्मकं पत्रं लिखित्वा शंभुराजाय तद्वितरितुं स्वशिष्यं प्रैषयन्, परन्तु फलं नाभूत्.

वाचकाः ! इत्थं संक्षेपेण श्रीसमर्थचरणानां तत्त्वोपदेशं निरूप्य संसारवृत्तिश्च निरूपिता. अधुना तत्त्वोपदेशाभासांस्तथा वृथातत्त्वज्ञानिमन्यांश्च निराकर्तुं श्रीसमर्थाः कथं प्रायतन्तेति वयं वक्ष्यामः. इदं-ह्यावश्यकं कर्म—यत्—यथा तत्त्वोपदेशार्थं समीचीनाः शिष्या निर्मातव्यास्तथैव तत्त्वोपदेशाभासोपदेशकाश्च निराकर्तव्याः. यथा हि कृषीवलो बीजानि वप्तुं प्रयतते तथैव वृथासमुत्पन्नानां घासादीनां निराकरणेऽपि.

प्रायो जनसमूहे द्विविधा जनास्तत्त्वज्ञानित्वेन कथ्यन्ते. एकः केवलं तद्विषयकाणि प्रभूतानि पुस्तकानि पठित्वाऽक्षरलापने संपादितसामर्थ्योऽनुभवशून्यः. अयमेव वर्गः शास्त्रिपदेनोच्यते. द्वितीयश्च—साधारणसंस्कृतप्राकृतग्रंथेभ्यस्तत्त्वविचारसरणिं गृहीत्वा विशेषकार्यासत्वे किंचित्तद्विषयकं प्रलपन्. इमावुभावपि यथासंख्यं लोकादरं स्वचित्तसन्तोषं पुरस्कृत्यैव प्रवर्तेते नास्ति तत्रैकस्याप्यनुभवः. एतावेवोद्दिश्य 'कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव' इति सुभाषितकारा वदन्ति. सज्जनाः ? तत्त्वज्ञानमार्गस्य दुर्गमत्वेन नास्ति तत्रायोग्यानां प्रवेशः. योग्याश्च विरलाः. तेन योग्यताभावेऽपि प्रविशद्भिरेभिर्दूषितोऽयं वेदान्तमार्गो लोकेऽत्यन्तमुपहसनीयतां प्रापितः.

तयोरेतयोर्मध्ये प्रथमवर्ग एव महान् प्रबलः. यतः स स्वभावतोऽज्ञानी पुस्तकपाण्डित्यसम्पन्नो अनेकशास्त्रेषु सारासारविचारासमर्थः स्वयं नष्टः परानपि नाशयतीति न्यायेन लोकानधिकमेव

भ्रामयति. वाचकाः ? श्रीसमर्थचरणाः प्रदर्शितरीत्या तत्त्वज्ञानिमन्यान् परं निरभर्त्सयन्. इदमपि तेषामवतारकृत्यमासीत्. यथा दुर्लभे रजते शुक्तिमेव रजतत्वेन व्यपदिश्यमाना वणिजो राज्ञाऽवश्यं दण्डनीयास्तथैव दुर्लभे तत्त्वज्ञाने ये खल्वीदृक्रीत्या जनान् भ्रामयन्ति तेऽवश्यं सत्येन तत्त्वविदा दण्डनीयाः. तेषां चायमेव दण्डः—यत्—अहं च मिथ्यैवात्मानं तत्त्वविदं मन्ये 'अहमस्मि मूढ' इति ज्ञानस्योदयः. एतादृशज्ञानोत्पत्त्यर्थं सत्येन तत्त्वविदाऽवश्यं प्रयतनीयम्. एवं प्रयतमाने सत्ये तत्त्वविदि लोककल्याणं न्याय्यमार्गानुष्ठानं च संभवति. अस्तु. सम्प्रति श्रीसमर्थचरणैः कथमेतेषां निराकरणार्थं प्रयत्नाः कृता इति पश्यामः.

श्रीसमर्थानां समये वामनो नाम महान् पण्डित आसीत्. स तु सर्वशास्त्रपारंगतोऽपारगर्वसंभारभासुरः, स्वपुस्तकपाण्डित्यभारभुग्नः क्रमेण तांस्तान् पण्डितावासान् गत्वाऽसंख्यान् पण्डितान् जित्वाऽजय्यपत्राणि जग्राह. एवं क्रमेण विजयमानः स काशीक्षेत्रं जगाम. तत्रैकदा पुरीषोत्सर्गार्थं बहिर्गतः कलहायमानयोः ब्रह्मराक्षसयोः संवादमशृणोत्—अहमत्र प्रथममागतो मदीयैषा शाखा. यः खलु प्रसिद्धो वामन इमां काशीं जेतुमागतः स पंचत्वं प्राप्य ब्रह्मराक्षसो भविष्यति तदर्थमेषा शाखा मया स्थापितेति. स तु वामनपण्डितस्तमिमं संवादं श्रुत्वा 'आजन्म कृत्स्नानि शास्त्राणि पठित्वा केवलं मया ब्रह्मराक्षसयोनिरर्जितेति' मन्यमानः खिन्नः सर्वं शास्त्रपाण्डित्यगर्वं विहाय दीनवत्तुकारामसाधुवरान् शरणं जगाम. ते तु तं श्रीसमर्थरामदासस्वामिनां शरणीकरणायादिशन्.

वाचकाः ? अस्य वामनपण्डितस्येदृक् संस्कृतभाषाभिमान आसीद्यत्स कदापि महाराष्ट्रभाषां नाभाषत. स हि मेने संस्कृतभाषां विहायान्यासु भाषासु काव्यविधानं नाम मूढस्य कर्मेति. सज्जनाः ? केवलं परस्परं व्यवहारार्थं कल्पितायाः भाषायाः श्रेष्ठत्वे कोऽयं दुरभिमानः. पशवो हि स्वभाषाभिमानं तादृशं न वहन्ति यादृशमिमे प्राज्ञंमन्याः! सज्जनाः ? यो ह्यर्थमनभिसंधाय केवलं भाषाभिमानमेव बिभर्ति स प्राणं विहाय शरीरं, गात्रं विहाय वस्त्रमेवात्मत्वेन मन्यते'. अस्तु.

अथ श्रीसमर्थचरणास्तं शरणागतं वामनपण्डितं हिमालये द्वादशवर्षपर्यन्तं तीव्रतपश्चरणायादिशन्. तदप्यनुष्ठीय समागतं तं पण्डितप्रवरं महाराष्ट्रभाषायामेव ग्रंथांल्लिखितुं समादिशन्.

एवमेवैकदा सदाशिवशास्त्री नाम महान् पण्डितः काशीक्षेत्र आसीत्. स तु कर्णाकर्णिकया समागतां शिवराजस्य कीर्तिं निशम्य तदाश्रितपण्डितान् जेतुं मत्तगज इव राजदुर्गमागच्छत्. शिवराजश्च विद्वदादरपरस्तं पण्डितं सम्यक् सत्कृत्य स्वराजधानीमानयामास. तदानीं च शिवराजाश्रितपण्डितेषु गागाभट्टो नाम परं विद्वान्विप्र आसीत्. स तु सदाशिवशास्त्रिणं वादार्थमागतं वीक्ष्य तस्य नानाशास्त्रेषु पाण्डित्यं तथा वादकौशलं च जानन्नात्मनोऽयोग्यतां च विभावयन् रात्रौ तस्य शास्त्रिणो गृहं गत्वा तं पण्डितं विज्ञापयामास. 'के वयं वादार्थं युष्माकं पुरस्तात्स्थातुं च. वयं तु केवलमिमं राजानमाश्रित्य संपादितेन द्रव्येण कथमपि संसारयात्रां कुर्मः. यदि च युष्माभिः सह शास्त्रार्थं विधातुं कश्चन पुरुषो योग्योऽस्ति चेत्स श्रीसमर्थरामदासस्वामिन एव. ते

हि शिवराजस्य गुरुचरणाः. नैतावदेव किंतु सर्वोऽपि महाराष्ट्रदेशस्तान्गुरुत्वेन मन्यते. अतो यदि व इच्छा विवदितुं तदा तैरेव समं विवादः करणीय' इति.

तस्य गागाभट्टस्येदं वचनं निशम्य स दुरभिमानी सदाशिवशास्त्री मनसि तथैव निरचिनोत्. प्रभाते च राजसभां गत्वा स 'श्रीसमर्थैः समं विवदितुं मम मनीषाऽस्तीति' निःशंकं जगाद. शिवराजस्तु तस्य भाषणेन विस्मितः 'न तेऽधीतशास्त्राः किंतु तपस्विनो निस्पृहा भगवद्भक्ताः केनापि समं न विवदन्ते' इति प्रोवाच. तथापि स दुरभिमानी दुराग्रहं न मुमोच. ततश्च तस्य ब्राह्मणस्य दुराग्रहं विलोक्य तं महता कष्टेन श्रीसमर्थानां समीपमानयत्. श्रीशिवराजश्च श्रीसमर्थचरणान् प्रणनाम तथा गागाभट्टोऽपि, परन्तु स शास्त्री न ननाम नापि श्रीसमर्थैः कृतं नमस्कारं प्रतिजग्राह. केवलं—यो हि वादे हीनशक्तिः स्यात्सोऽधिकशक्तिकं विजयिनं पण्डितं नमस्कुर्यात्. वादमकृत्वा समविषमभावमज्ञात्वा कथं नमस्कारो ग्राह्यो वा करणीयो वेति जगाद. भूदेवा यूयं सर्वदा नमस्करणीया एवेति वदत्सु सत्सु श्रीसमर्थेषु स दुरात्मा पाण्डित्यमदिरामदान्धः किमपि न विचारयामास.

अथ श्रीसमर्थास्तस्य पण्डितस्य विवादाग्रहं वीक्ष्य समीपतो गच्छन्तमेकं काष्ठवाहकमाह्वयन्. ततस्तमपृच्छन्—त्वं कोऽसीति. स तु प्रत्यवदत्—स्वामिचरणाः ? अहमस्मि जात्या चाण्डालः. चाफळमठे प्रतिदिनं काष्ठभारमानीय क्षिपामि. तत एव लब्धेनान्नेन जीवामीति. समाप्ते च तस्य वचने श्रीसमर्थाः स्वाश्रितकाष्ठदण्डेन (कुबडी) भूमौ तिस्रो लेखा उल्लिख्य क्रमेण तासु तं चा-

ण्डालं प्रवेशयन्तस्तं क्रमेण शूद्रवैश्यक्षत्रियब्राह्मणरूपतां प्रापयन्. ब्राह्मणत्वं प्राप्तं तं सदाशिवशास्त्रिणा समं विवदितुं चादिशन्. प्रथममेव तमेनं प्रकारं वीक्ष्य विगलितपाण्डित्याभिमानः स सदाशिवशास्त्री तेन लब्धब्राह्मणत्वेन चाण्डालेन वादे तथा पराजितो येन च्छुरिकया स्वकण्ठं विदारयितुं प्रायतत.

श्रीसमर्थचरणाश्च तं तथाव्यापारान्निवर्त्य तत्त्वोपदेशैः सान्त्वयामासुः. सोऽपि तानेव गुरुत्वेन मन्यमानो वासुदेवगोसावीति नाम बिभ्रत्तस्थौ.

वाचकाः ? यद्यपि श्रीसमर्था वेदोक्तयज्ञादिक्रियासु सादर आसंस्तथापि तासां दुष्करत्वं पश्यन्तो भक्तिमार्गमेव सयत्नं प्रावर्धयन्त. अन्यं च भक्तिमार्गेऽपि दुष्करत्वसंपादकं न्यषेधन्. एकदा श्रीसमर्थचरणैरनुगृहीतोऽयमेव वासुदेवश्चाफळमठे निवसन्विचारयामास—सर्वेषामपि मंत्राणामस्ति न्यासक्रमः, परन्तु श्रीरामदासस्वामिभिरुपदिष्टस्य त्रयोदशाक्षरपरिमितस्य महामंत्रस्य न्यासादिक्रमो नास्ति. यद्यपि श्रीरामदासस्वामिनो भगवद्भक्ता अलौकिकसामर्थ्यशालिनस्तथापि संस्कृतभाषानभिज्ञत्वात्तैर्न्यासादिकं नास्य मंत्रस्य कृतम्. तदिदं न्यूनमहं पूरयिष्यामीति.

अथ यथाशास्त्रं तं महामंत्रं न्यासादिभिः संस्कृत्य तथा लिखित्वा च तत्पुस्तकं श्रीसमर्थचरणान्दर्शयितुं गृहीत्वा समाययौ. श्रीसमर्थाश्च तद्वीक्ष्य 'पण्डिता एव यूयं ! किमशक्यं युष्माकं ? अस्माकमिदं स्खलनं पूरितं ?' इत्यवदन्. इमां प्रशंसामाकर्ण्य सानन्दस्य तस्य वासुदेवस्य तस्मिन्नेव क्षणे वागिन्द्रियमनश्यत्. नष्टवागिन्द्रियः स वासुदेव आत्मानं मूकं विजानन् महता दुःखेनाकुलः साक्रोशं रुदन् श्रीसमर्थचरणयोर्लुलुण्ठ.

ततश्च कल्याणस्वामिप्रभृतिभिः प्रमुखैः शिष्यैर्विज्ञप्ताः श्रीसमर्थाः स्वहस्तस्पर्शेन तं पुनरपि वाग्मिनं विधाय—वत्स ? वासुदेव ? अस्मिन् कलियुगे यथाशास्त्रमाचारो ह्यशक्यः. अतएव नूतनः साधुभिरेष केवलं प्रेममयो भक्तिमार्गः स्थापितः. तत्रापि त्वं यदि शास्त्रपाण्डित्यबलान्नानाविधानाचरणक्लेशानुत्पादयसि तदा कथमस्मिन्नपि मार्गे लोकप्रवृत्तिः स्यात् ? तस्मादीदृशाद्व्यापारादुपरमस्वेत्युपादिशन्.

सज्जनाः ? निरूपितः पुस्तकपण्डितानां साधूनां मध्ये कियान् भेद इति. साम्प्रतं ये खलु सामान्यत इतस्ततो वार्तावशात् ज्ञाततत्त्वविचारसरणयो वृद्धा जनाः कालक्षेपाय तत्त्वज्ञानालापांश्च कुर्वन्ति तानपि अधिकृत्य श्रीसमर्थैः किं कृतमिति कथानिरूपणमिषेण लिखामि.

एकदा श्रीसमर्थचरणाः शिष्यैः समं निर्जनं वनमुपविष्टाः. तत्र च वेदान्तविचारः प्रारब्धः. तस्मिन् समये 'जगत्सत्यं मिथ्या वा' इति प्रश्नः श्रीसमर्थैः स्वयमेव कृतः. तमेनं प्रश्नमुत्तरयितुमिच्छुरेकः शिष्यो जगाद—अत्र कः संदेहः ? यथा हि 'रज्जुसर्पो भासमानोऽपि मिथ्या तथैवेदं कृत्स्नं जगदपि' इति. अनवसित एव तद्वचने समीपस्थाद्बिलान्महान् भुजंगो निश्चक्राम. श्रीसमर्थाश्च तं गृहीत्वा वलयीकृत्य तस्य शिष्यस्य कण्ठेऽधुः. स तु भीत्या व्याकुलः 'एष सर्पो मां दशेत्' इत्युच्चैराक्रोशन् सर्पापनयनाय विज्ञापयामास.

श्रीसमर्थाश्च दयालवस्तस्य कण्ठात्सर्पमपनीय 'पुनर्नैवं वक्तव्यं ! यस्य कामक्रोधौ क्रमेण वर्धेते. लोभोऽपि चेतो न मुंचति, नापि

दुःखस्य क्षणमात्रं तितिक्षाऽस्ति, तेन संसारिजनेन संसारो मिथ्येति न वक्तव्यं. किंत्वयं सत्य एवेति मत्वा यथानियमं तस्मान्मोचनाय प्रयत्न आस्थेयः. ये तु लोकोत्तराः सकलरागद्वेषादिदोषविनिर्मुक्तास्तैरेव संसारो मिथ्येति वक्तव्यं, वक्तुं च तेषामस्ति योग्यता नेतरेषामित्युपादिक्षन्.

सज्जनाः ? पाठकाः ? एवं यथाशक्ति "श्रीसमर्थचरणानां तत्त्वोपदेशः संसारवृत्तिश्च' इति विषयो निरूपितः. अयं च विषयो यथा सविस्तरं निरूपणीयस्तथा नात्र निरूपितो विस्तरभयात्. अस्य चरितस्य निर्माणे प्रधानहेतुः "बालानां संस्कृतभाषायामनायासेन प्रवेश एव" इति प्रस्तावनायामेव मया प्रतिपादितम्. तद्यदि तत्त्वज्ञानमेवाऽत्र निरूपयामि, तदा दुर्बोधतया स हेतुर्दत्ततिलांजलिः स्यात्. विशेषतश्चास्मिन्नल्पे लेखे प्रदर्शितरीत्या तेषां निस्पृहवर्तनं सर्वैरप्यनुकरणीयमेवास्ते. तथैव रघुनाथस्योपासनाऽपि.

सज्जनाः ? श्रीसमर्थपादानामाचरणेष्विदमनुकरणीयमिदं नेति वदन्नेव मूर्खः. यश्च यथाशक्ति तेषां सद्गुणानंशतोप्याचरितुं प्रयतेत स एव श्रेष्ठ इति ज्ञेयम्.





# ( १३ ) ( अवतारसमाप्तिः )

वाचकाः ? निरूपितं खलु मया कृत्स्नमिदं श्रीसमर्थानामवतार-चरितं. सम्प्रति तदिदं पावनं चरितमुपसंहरामि. तत्र च प्रथमतः श्रीसमर्थैः कथं स्वीयोऽवतारः समापित इति निरूपयामि.

श्रीसमर्थाः सांवत्सरिकनियमानुरोधेन चाफळमठं श्रीरघुपते-रुत्सवार्थमागच्छन्. समाप्ते च तस्मिन्महोत्सवे मठस्था अधिका-रिणः श्रीसमर्थान्प्रति 'श्रीच्छत्रपतिशिवाजिमहाराजै रघुपतेर्देवाल-यस्य तथा दीपमालाया निर्माणार्थं धनं वितीर्णं. अत्रान्तरे ते च दिवंगताः. तद्यदि युष्माकं नियोगः स्यात्तदा वयमिदं कार्यं करि-ष्याम' इति व्यज्ञापयन्. श्रीसमर्थेषु 'तथास्तु' इत्युक्त्वा तूष्णींभू-तेषु सत्सु तेऽधिकारिणः सर्वं तद्धनं तेषां पुरतो निधाय गणयि-तुमारभन्त. अथ यदा श्रीसमर्थाः क्रमेण तद्धनं ब्राह्मणेभ्योऽदुः, तदा सर्वेऽपि ते विस्मिता मुकुलितहस्ताः—'गुरुपादाः ? इदं धनं देवालयार्थमेव प्रदत्तं. तद्यथा तदर्थमेवैतद्व्ययि स्यात्तथा नियोगः कर्तव्य' इति विज्ञापयामासुः. तामिमां विज्ञप्तिमाकर्ण्य स्मेरमुखाः श्रीसमर्थाः—'समर्थो रघुपतिः स्वदेवालयस्य निर्माणार्थं यमाज्ञापयेत्स एव तद्विरचयेत्! नात्र कापि शंका' इति जगदुः. ततश्च सीता-नाथस्य मन्दिरं प्रविश्य श्रीरामचन्द्रं प्रणम्य—'भगवन् जानकी-जाने ? युष्मदाज्ञयैव दासेनायं संप्रदायः स्थापितः. साम्प्रदायिका भक्ता यथाशक्ति सेवां चक्रुः करिष्यन्ति च. यद्यपि तवैवास्ति भक्तहितचिन्ता तथापि केवलं मयाऽज्ञेन सम्प्रदायपालनार्थं प्रा-र्थ्यस' इत्युक्त्वा हनूमन्तं प्रणम्य सज्जनगडदुर्गमागच्छन्. यदा तु

श्रीसमर्था भगवतः प्रार्थनायां निमग्ना आसंस्तदा दिव्यः प्रकाशः समग्रं देवालयं भासयामास. श्रीसमर्थशिष्याश्च तं प्रकाशं कपाटच्छिद्रेभ्योऽपश्यन्.

अथ तदानीमेव कल्याणस्वामिनो 'डोमगांवमठात्' निर्गत्य श्रीसमर्थचरणानां दर्शनार्थं सज्जनगडदुर्गमाययुः. तदा च समग्रो दासबोधः समाप्त एवासीत्. स च स्वयं कल्याणस्वामिभिर्लिखितः श्रीसमर्थैश्च स्वयं शोधितोऽद्यापि डोमगांवमठे विराजते. उषित्वा च कतिपयदिनानि कल्याणस्वामिषु स्वमठं प्रति प्रयातेषु सत्सु श्रीसमर्था अन्नग्रहणमत्यजन्. केवलं दुग्धमेव पीत्वा ते प्राणधारणां चक्रुः. अक्कादेवीं तथोद्धवस्वामिनो विहायान्यस्य प्रवेशं न्यषेधन्.

अथ क्रमेण श्रीसमर्थानां शरीरस्वास्थ्यमनश्यत्. तद्वीक्ष्योद्धवस्वामिनः श्रीसमर्थान्प्रति—प्रतिदिनं शरीरं क्षीयते तत्कंचन लौकिकं वाऽलौकिकं वोपायमनुष्ठातुमाज्ञा देयेति पप्रच्छुः एवं पृष्टाः श्रीसमर्थाः 'नास्त्यावश्यकता सम्प्रत्यनुष्ठानस्य' इत्यवदन्. तदानीमेव कश्चन परमभगवद्भक्तो हरिदासः श्रीसमर्थानां दर्शनार्थमागच्छत्. स च यस्मिन्दिने श्रीसमर्थानामाज्ञया हरिकीर्तनं चकार तस्मिन्दिने श्रीसमर्था बहिरागत्य तत्कीर्तनं श्रोतुमतिष्ठन्. तदानीं च तेषां तेजस्विनीं मूर्तिमवलोक्य सर्वेऽपि सेवका विस्मिताः 'न खलु कोऽपि रोगविशेषो दृश्यते. ते तु सततमेकान्ते निवसन्तः किंचिदनुष्ठानमाचरन्ति' इति परस्परं प्रालपन्.

ततश्च श्रीसमर्थानां प्रकृतिं क्रमेण क्षीयमाणां वीक्ष्य सर्वेऽप्युद्धवगोसावीप्रभृतयः शिष्यवर्गाः श्रीसमर्थान्विज्ञापयामासुः—गुरुचरणाः ? देहः क्षीयमाणो दृश्यते, अतः कस्य वा रघुपतिसेवाया-

मधिकार इति भवद्भिरेव व्यवस्थापनीयम्. वयं च तदाज्ञां शिरसा स्वीकुर्वन्तोऽनुवर्तिष्यामह इति. श्रीसमर्थाश्च प्रथमं अक्कादेव्या अयमधिकार इति प्रावोचन्. अक्कादेवी च 'यद्यपि गुर्वाज्ञा प्रमाणं तथाप्यस्य देहस्य नायमधिकार' इत्यवदत्. ततश्च श्रीसमर्थैः—'उद्धवस्यायमधिकार' इत्युक्ते तेऽपि तथैवावदन्. तदा तु श्रीसमर्थाः—युष्मन्मनःसु श्रेष्ठानां पुत्रानानीय तेभ्योऽयमधिकारो देय इति वर्तत इति तर्कयामि. तत्तथैव वा भवत्वित्युक्त्वा दिवाकरभट्टं श्रेष्ठानां पुत्रयोरानयनाय प्रैषयन्. तदानीमेव तंजावरनगराच्छिवराजबन्धुभिर्व्यंकोजीनृपैः प्रेषितां श्रीरघुपतिमूर्तिमागतां विलोक्य सानन्दाः श्रीसमर्थास्तस्मिन्नेव दिने स्वावस्थानस्थान एव तामस्थापयन्. संपूज्य च जानकीनाथं—रघुनाथ? चाफलमठं नीत्वा नवमीमहोत्सवे त्वं सिंहासनेऽभिषेचनीय इति महतीच्छाऽसीत्परन्तु सा न परिपूर्णा! अस्तु. तवेच्छेति जगदुः.

एवं क्रमेण समये प्रयाति सति शालिवाहनशकीये गुणखेन्द्रियब्रह्मसंमते संवत्सरे माघमासस्य कृष्णपक्षस्याष्टमी तिथिः प्राप्ता. तदानीं स्वप्रयाणकालः समीपमागत इति ज्ञात्वा स्वशिष्यसमूहे कोपीदं जानाति नवेति परीक्षितुं सर्वस्मिन्शिष्यवृन्दे समुपविष्टे सति—

रघुकुलतिलकस्य प्राप निर्याणकालः ।
स्मरणभजनकार्यैः पूर्णतां प्रापणीयः ॥

इत्यर्धमेव श्लोकमुच्चैरपठन्. तदानीमेवोद्धवस्वामिनः सर्वं वृत्तं जानन्तः—

स च खलु नवमीयं निश्चिताऽस्मन्मनोभिः ।
त्वरितमिह विधेया कार्यसिद्धिः समग्रा ॥ १ ॥

इत्युत्तरार्धं प्रत्यवोचन्. तेन सन्तुष्टाः श्रीसमर्था उद्धवस्वामिन आशीर्वचनैः सत्कारयामासुः. एवमष्टम्यां तिथौ रात्रौ नामस्मरणं तथा हरिकीर्तनमखण्डं प्रचचाल.

अथ भगवति सवितरि निस्तेजस्के स्वनियोगमनुष्ठातुं नवमीदिने पूर्वाचलमारूढे सति श्रीसमर्थाः पर्यंकादवतीर्य भूमावुपाविशन्. तदानीं दिगम्बररूपधारिणः श्रीसमर्थाः केवलं पादयोः पादुके अधारयन्. केनापि भक्तेनानीतां सितशर्करां भक्षयित्वा जलं पीत्वा 'सर्वैर्बहिर्गन्तव्यं' इत्यगदन्. तदा तु तेषां पुरत उद्धवस्वामिनः पश्चादक्कादेवी निभृतमतिष्ठताम्. तौ च पर्यंके समुपवेष्टुं श्रीसमर्थान्प्रति व्यज्ञापयताम्. श्रीसमर्था अपि–मामुत्थाप्य पर्यंके स्थापयत' इत्यवदन्. यदा च दशभिः शिष्यैरुत्थापिता अपि श्रीसमर्था नोदतिष्ठन्त, तदा श्रीसमर्थाः प्राणवायुं बलादाकर्षितुमारभन्त. तद्वीक्ष्य 'श्रीसमर्था अधुनाऽस्मान्विहाय दिवं प्रयान्तीति मन्यमानाः सर्वेऽप्युद्धवस्वामिप्रभृतयः शिष्यगणाः साक्रोशं रुरुदुः. तान् रुदतो वीक्ष्य जगदलंकाराः श्रीसमर्थपादाः–अस्मच्छिष्यत्वं संपाद्यास्मिन्समये रोदनमधीतं भवद्भिरिति–सकोपमूचुः. तन्निशम्याक्कादेवी—गुरुचरणाः? युष्मत्कृपया किंचिज्ज्ञायत एव. परन्तु सगुणमूर्तिर्गच्छति? अधुना का वा सेवनीया? कया सह वा भाषितव्यम्? इति साश्रुपातं जगाद. तदा तु प्रलयकालमेघनिनादसंनिभेन हनूमद्धुंकारानुकारिणा स्वनेन—**यो हि मयि दिवंगते सति पश्चान्मया सह भाषितुमिच्छेत्तेन मया प्रणीता दासबोधप्रभृतयो**

**ग्रंथाः पठनीयाः. अहं च तत्तद्ग्रंथद्वारा तेन समं संभाषिष्य इति** अगादिषुः. अनन्तरमेव चैकादशकृत्वः 'हरहर' इति नामोच्चार्य पश्चात् 'राम' नाम्न्युच्चारित एव श्रीसमर्थचरणानां मुखारविन्दाद्दिव्यं तेजो निर्गत्य श्रीरघुपतिमुखारविन्दं प्रविवेश. सर्वे च शिष्या मिलिता भगवन्नामघोषमत्यन्तं चक्रुः. एवं क्रमेण भारतोद्धारार्थमवतीर्णाः श्रीसमर्थचरणाः शालिवाहनशकस्य—गुणखेन्द्रियब्रह्मपरिमिते १६०३ संवत्सरे माघकृष्णनवम्यां स्वर्गमलंचक्रुः.

वाचकाः ? यैः खलु सकलं जीवनं लोककल्याणार्थमेव यापितं. यैश्च समस्ते भारते नानामठान्स्थापयित्वा लोकजागृतिं विधाय शिवराजं सहायीभूयाऽत्यन्तोन्मत्तासंख्ययवनाधिपेभ्य इयं भारतभूस्तथाऽयं सनातनधर्मोऽनुयायिभिः समं रक्षितस्तेषां श्रीरामदासस्वामिनां स्वर्गगमनं निशम्य वयमपि दुःखायामहे, तदा यैः खलु प्रत्यक्षमवलोकिता भाषिता उत्कटभक्त्या सेविताश्च श्रीसमर्थचरणास्तेषामुद्धवस्वामिप्रभृतीनां कियद्वा दुःखमभवदिति वाचकैरेव मनसा विचारणीयम् ? प्रकृतमनुसरामः.

अथ सर्वेऽपि श्रीगुरुचरणानामुपदेशमनुस्मरन्तः शोकं विहाय 'श्रीसमर्थदेहः क वह्निसात्करणीय' इति विचारयामासुः. तेषु च विचारयत्सु सत्सु—अक्कादेवी तानवदत्. 'मठस्योत्तरेण योऽयं गर्तो दृश्यते तत्र स्वदेहसार्थक्यं करणीयमिति श्रीगुरुचरणानां मनीषाऽसीदिति जानामि. यतस्तस्मिन्गर्ते शिल्पिभिः पूरयितुमारब्धे सति श्रीसमर्थास्तानवदन्—'अयं गर्तो न पूरणीयः. कस्यापि कार्यस्य

साहाय्यकारी भविष्यति' इति. तद्वचनं निशम्य ते सर्वेऽपि शिष्या मिलित्वा चन्दनबिल्वकाष्ठानि चाहृत्य तं श्रीसमर्थानां देहं वह्निसात्कर्तुं प्रायतन्त. अचिरादेव करालज्वालाजटिलो भगवान्हुताशनस्तत्पवित्रं शरीरं स्वरूपतां प्रापयामास. तदानीमुद्धवस्वामिनः पुत्रकर्माकार्षुः.

वाचकाः ? एवंरीत्या श्रीसमर्थचरणेषु स्वर्गं गतेषु तदीयाः शिष्याः परस्परं विचार्य तेषां समाधिं चाफळमठे रघुपतिदेवालयसमीपे विरचय्य प्रतिवर्षं महोत्सवं चक्रुः. श्रीगुरुचरणानामस्थीनि चाफळमठ एव वृन्दावनेऽस्थापयन्.

अथ यदा शिवराजपुत्रः शंभुराजो यवनैर्बन्दीकृतस्तदा सज्जनगडदुर्गमपि यवनैराक्रान्तं तदानीं ते सर्वेऽपि शिष्याश्चाफळमठाद्रघुपतिं गृहीत्वाऽन्यत्रागच्छन्. पश्चाच्च शिवराजस्य द्वितीयपुत्रेण राजारामेण पुनरपि यदा स देशो गृहीतस्तदा ते सर्वेऽपि भूयः स्वस्थानमाजग्मुः.

एवंप्रयातेषु केषुचित्संवत्सरेषु केशवगोसावीनामा श्रीसमर्थशिष्यः स्वगुरूणामस्थीनि गृहीत्वा काशीं गन्तुमियेष. तदाच बहुभिर्निषिद्धोऽपि स हठादेव तस्माद्वृन्दावनादस्थीनि निष्कास्य काशीं गन्तुं प्रचचाल. तस्मिन्नेव दिने डोंमगांवमठे कल्याणस्वामिनः सर्वानपि स्वशिष्यानेकत्रीकृत्य—नास्ति त्वराया आवश्यकतेति भूयोभूयो निवेदितोऽपि केशवस्वामी गुरुचरणानामस्थीनि निष्कासयामास. साम्प्रतं श्रीसमर्थचरणा भागीरथीं स्नातुं गच्छन्ति तदत्रास्माभिरवस्थातुं नोचितं. वयमपि श्रीगुरुचरणैः सममेव भागी-

रथीं स्नानार्थं गमिष्याम' इति न्यवेदयन्. सर्वैर्दुःखाकुलैः शिष्यैः—पश्चात्सेवाधिकारः कस्य—इति पृष्टा मुधोजिगोसाविं निर्दिश्य स्वस्थचेतसो रघुपतेः पुरस्ताद्दर्भासने समुपविष्टा 'राम' इतिशब्दं समुच्चार्य देहमत्यजन्.

ततश्च केशवस्वामी श्रीसमर्थचरणानां तथा तदीयप्रियशिष्याणां कल्याणस्वामिनामस्थीन्यादाय काशीयात्रां विधाय चाफळमठं पुनरप्याजगाम.

वाचकाः ? श्रीसमर्थसम्प्रदायानुयायिभिर्गुरुवत्पूजिता नानासंकटेभ्यो रघुपतिं रक्षित्वा निरंतरं सेवमानाः श्रीरामीरामदासापरनाम्नां श्रेष्ठानां पुत्राश्चाफळमठे न्यवसन्. ते च तत्रैव वंशपरंपरया निवसन्तोऽलौकिकानि कार्याणि चक्रुः. अधुनाऽपि सहस्रशः श्रीसमर्थरामदाससंप्रदायानुयायिनः केवलं भिक्षावृत्त्या जीवन्तो लोकोपकारं विदधति. सम्प्रति च श्रीगंगाधरबुवानामानः श्रीसमर्थवंशजाश्चाफळमठे विराजन्ते. सर्वे च महाराष्ट्रियास्तान्गुरुवत्प्रमाणीकुर्वन्ति.

प्रियवाचकाः ? एवं यथाशक्ति यथामति निरूपितं मया परमपवित्रं कर्तव्यतादर्शभूतं श्रीसमर्थचरणानां चरितम्. यद्यपि साम्प्रतं गुणविवेचनं कर्तव्यमिति न्यायप्राप्तं, तथापि श्रीमत्सु समर्थचरणेषु दोषाणामसंभवादेव तेषां गुणाकरत्वं. तेन सर्वथाऽनुकरणीया एव ते. किंच द्वादशप्रकरणे मयांऽशतश्च ते बोधिता एवेति अधुना विस्तरभयादुपरम्यते.

प्रियबान्धवाः! धन्यास्ते श्रीसमर्थचरणप्रमुखाः साधुवराः

सदैव लोकोद्धारपरायणाः. धन्याश्च ते कल्याणस्वामिमुखाः श्रीसमर्थशिष्याः. धन्याश्च ते शिवराजप्रभृतयो राजर्षयः. धन्यः स कालो यत्रेदृशानि नररत्नान्यजायन्त. सज्जनाः? वयमपि अस्मत्पूर्वजानां लोकोत्तराणि चरितानि अभ्यस्यन्तस्तदनुकूलं च वर्तमानाः सदैव दीननाथं जानकीजानिं ध्यायन्तो भाविनं भाग्योदयं प्रतीक्षामहे.

